

# VÂSAVADATTÂ

OF

# SUBAND U

## EDITED WITH A CRITICAL COMMENTARY

BY

T. V SRINIVASACHARIAR (SARASVATA-SARVAGNA),

*Senior Sanskrit Pandit,*

ST JOSEPH'S COLLEGE, TRICHINOPOLY,

AND

## AN ENGLISH INTRODUCTION

BY

MR G KASTURIRANGA AIYANGAR, M A,

*Lecturer, Maharajah's College, Mysore*



PRINTED AT ST JOSEPH'S COLLEGE PRESS,
TRICHINOPOLY.

1906.



Price Re. 1-4.] [Postage Extra.

# ॥ भूमिका ॥

—**—

एतत्प्रबन्धरत्नस्य निर्माता महाकविस्सुबन्धुः कतमस्मिन् समये वसुधामलञ्चकार । एतदीया ग्रन्थलेखन शैली, एतत्प्रबन्धस्वरूपञ्च, कीदृगिति विचारयामस्सम्प्रति सयुक्तिकं सप्रमाणञ्च । अत्रादौ प्रबन्धुर्जीवनसमयो निर्द्धार्यते । एष महाकविर्विक्रमसभापण्डितान् कविसार्वभौमात् काळिदासादर्वाचीनः । एतस्मिन्नेव ग्रन्थे प्रथमतः "सारसवत्ता...कः । सरसीव...गतवति भुवि विक्रमादित्ये ।" इति विद्वत्पक्षपातिनं रसिककुलावतंसं विक्रमभूपालमुद्दिश्य कवेरनुशोचनात् । स विक्रमादित्यस्तु क्रिस्तुजननोपक्रमव्यावहारिकाङ्गलसंवत्सरारम्भात्प्राक् षट्पञ्चाशत्तमे वत्सरे मालवराजधान्यामुज्जयिन्यामवात्सीदित्येतन्निश्चप्रचमास्माकीनैः । पाश्चात्याः परमन्यथा व्यवहरन्ति । यथा—'षष्ठशतकोपक्रम एव विक्रमभूपालोऽवर्तिष्ट । स कारूर्युद्धे शत्रून् व्यजेष्ट । तन्निबन्धनं निजयशःप्रख्यापकं कञ्चन स्वनामाङ्कितं शकव्यवहारमारिप्समानस्स्वस्यातिप्राचीनतावबोधनाय स्वजीवनसमयापेक्षया पञ्चाशदुत्तरपञ्चशतहायनेभ्यः प्राक् स्वकीयं शकं

प्रतिष्ठापयामास ।' इति । तेष्वेव केचिद्विक्रमसत्ता 'गगनारविन्दमधुरसमाधुर्यसब्रह्मचारिणी' इति जल्पन्ति । स्यान्नामैतत् । क्रिस्तुसंवत्सरीयषष्ठशताब्द्याः प्रथमभागे विक्रमार्कोऽवर्तिष्ट । तस्यैवास्थानमलञ्चकार काळिदासश्चेत्येतदभ्युपगतं प्रायेण पाश्चात्यैर्ग्रन्थशोधनलेखनपदवीजाङ्घिकैः । किञ्चायमत्रैव प्रबन्धे वासवदत्तया कन्दर्पकेतोस्सौन्दर्यनिरूपणप्रस्तावे 'विफलमेव दुष्यन्तस्य कृते दुर्वाससश्शापमनुबभूव शकुन्तला ।' इति शाकुन्तलनाटकस्थं काळिदासेनैव कल्पितं शकुन्तलायाः दुर्वासश्शापप्राप्तिलक्षणमितिवृत्तखण्डं प्रमाणीकृत्यानूदितवान । अतस्समकालिकयोर्विक्रमार्ककाळिदासयोष्षष्ठशतकप्राग्भागवर्तिनोस्समनन्तरकालिकोऽयमिति वक्तुं समुचितम् । अपि च, बाणो हर्षचरितारम्भे 'कवीनामगळद्दर्पो नूनं वासवदत्तया ।' इत्येतत्कृति प्राशंसत् । पार्वतीपरिणयादिग्रन्थानां निर्माता बाणस्तु हर्षवर्धनाश्रितस्सप्तमशतकेऽवर्तिष्टेत्येतत् सुप्रसिद्धम । अतो बाणात्प्राक्तन इति विशदमवगम्यते । राघवपाण्डवीयग्रन्थकर्ता कविराजोऽपि बाणात्प्राक्तनत्वं सुबन्धोरभिलपन्नत्र संवदते । माग्डानल्नामा महाशयोऽपि दण्डिबाणयोर्मध्यमस्सुबन्धुरिति व्यक्तमभ्यधात् । वीवर्पण्डितोऽपि सप्तमशतकोपक्रमे सुबन्धोस्सत्तां निरदीधरत् । (१८५९) वत्सरे वासवदत्तां मुद्रितवता हाल्संज्ञ-

केन महाशयेनापि स्वयं विलिखितायां भूमिकायां सप्तमशता-ब्द्येव सुबन्धोस्समय इति निरणायि। नह्यन्यदीयोक्तिरेवात्र प्रमाणम्। अपि तु, वासवदत्तावर्णनप्रकरणे 'बौद्धसङ्गति-मिवालङ्कारप्रसाधिताम्' इति स्ववचनमपि। सोऽलङ्कारस्तुधर्म-कीर्तिनाम्ना बौद्धेन विरचितो ग्रन्थः। धर्मकीर्तिस्तु षष्ठशत-कस्य प्रथमभागेऽवृतदिति सोपस्कारमुपान्यासि सौगततन्त्र-परिशीलनपरैः। किञ्चायमत्रैव "न्यायविद्यामिवोद्योतकर-स्वरूपाम्" इति वर्णयति वासवदत्ताम्। स उद्योतकरः न्यायवार्तिककारः। स तु बौद्धाग्रण्यो दिङ्नागस्य परिपन्थी। ग्रन्थलेखनेनान्योन्यखण्डनपराविभावभूतामिति समगिरन्त लेखकाः प्राक्तनचरित्रस्य। दिङ्नागस्तु कालिदासेन सम-कालिकः तस्मिन् वैरायमाणो विद्यामदान्धश्चावर्तिष्टेति मेघदूते 'दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान्' इत्यनेन कालिदासोऽपि व्यक्तं व्यञ्जयति स्म। अनेन ज्ञायते न्याय-वार्तिककारोऽपि षष्ठशतकाग्रिमभाग एवासामासेति। अत्र तन्नामनिर्देशेन सुबन्धोस्तदनन्तरकालिकत्वं सुस्पष्टम्॥ इद-मत्र तत्वम्। एष कविः षष्ठशताब्दीमध्यवर्तिनश्श्रीदण्ड्या-चार्यस्य सन्निहितोत्तरकालिकः, सप्तमशतकावस्थितस्य बाण-स्यातिसन्निहितप्राक्कालिकश्च। प्रमाणन्तु, अत्रैव ग्रन्थे वासव-दत्तावर्णनप्रकरणे 'छन्दोविचितिमिव भ्राजमानतनुमध्याम्'

इति कवेरुक्तिः । छन्दोविचितिस्तु श्रीदण्डिमहाकविरचितः
न्दोग्रन्थः । एतेन स्वग्रन्थे दण्डिविरचितग्रन्थनामोट्टङ्कनेनाय
विस्स्वस्माद्दण्डिनः प्राक्तनत्वं प्रथयति । कश्चित्तु छन्दोवि
तिनामा ग्रन्थ एव नास्ति। तस्यैवासत्त्वे तस्य दण्डिकर्तृक
'कूर्मरमणीक्षीरसहोदरम् ।' इत्याह । तत्तु वचनममूलमि
नादरणीयं पण्डितैः । बाणेन च हर्षचरिते वासवदत्ताय
प्रशंसया ततोऽपि प्राक्तनत्वमस्य फलितचरम् । अत.पर
स्य महाकवेर्ग्रन्थलेखनशैलीं निरूपयामः । प्रायेणायं सु
न्धुरत्र ग्रन्थे गौडीं रीतिं, मध्यमकैशिकीं वृत्तिं, नारिकेळप
कञ्च, आद्रियते । रीतिर्नाम, गुणाश्लिष्टपदसङ्घटना । वृत्ति
स्त्वर्थसन्दर्भभङ्गी । पाकस्तु अर्थगम्भीरिमा । दण्डिन इ
नास्य कृतौ सारळ्यम् । नापि बाणस्येव काठिन्यम । अ
कवेर्वचनवैखरी सर्वत्र प्रकृताप्रकृतश्लेषमयी । तदुक्तं स्वय
मेव । 'सरस्वतीदत्तवरप्रसादश्चक्रे सुबन्धुस्सुजनैकबन्धुः
प्रत्यक्षरश्लेषमयप्रपञ्चविन्यासवैदग्ध्यनिधिं प्रबन्धम् ।' इति
उपमोत्प्रेक्षापरिसङ्ख्याद्यर्थालङ्कारविन्यसने विचित्रा अस
कवेश्चातुरी । नायमन्यग्रन्थच्छायोपजीवकः बाणवत् । अ
तु स्वतन्त्रः । स्वमेधया विविधविचित्रार्थान् तदभिलापक
शब्दांश्च मनोहारिण्या भङ्ग्या रचयितुमीष्टे । वर्णनविषयेऽ
प्यौचितीं नातिवर्तते । निपुणनिरूपणे बाणस्तत्र तत्र शब्द

तोऽर्थत आनुपूर्व्या च सुबन्धुमेवानुसरति । यथा (वासवदत्तायां) गुरुदारहरणं द्विजराजोऽकरोत् । (हर्षचरिते) द्विजानां राजा गुरुदारग्रहणमकार्षीत् (वास) पुरूरवाः ब्राह्मणधनतृष्णया विननाश। (हर्ष) पुरूरवाः ब्राह्मणधनतृष्णया दयितेनायुषा व्ययुज्यत। (वास) नहुषः परकलत्रदोहळी भुजङ्गतामयासीत् । (हर्ष) नहुषः परकळत्राभिलाषी महाभुजङ्ग आसीत्, इति । एवमेव कादम्बर्यां कादम्बरीतदन्तःपुरवर्णनादिषु, हर्षचरिते च श्रीहर्षनृपतितदास्थानवर्णनादिषु बहुषु स्थलेषु क्रियासमभिहारेण सुबन्धुमेवानुधावति बाणः । न केवलमिममेव । अपि तु भट्टारहरिचन्द्रमपि । विशिष्य तत्तन्निरूपणे संपत्स्यमानाद्ग्रन्थविस्तरतो बिभ्यत्सन् दिङ्मात्रमत्रोदाहार्षम्। एतेन स्पष्टमवगम्यते बाणस्य शब्दार्थरचनामार्गसन्दर्शकौ सुबन्धुहरिचन्द्रौ तस्मादभ्यर्हितौ चेति । कश्चिदेवमाह 'बाणः स्वतन्त्रः । तद्रीतिमेवानुसरन्त्यन्ये । तथा चायमाभाणकः । 'बाणोच्छिष्टं जगत् सर्वं इति' इति । तत्तु बाणपक्षपातिनो यस्य कस्यापि निष्प्रमाणं वचनमिति न विश्वसनीयं प्रामाणिकैः । अथेदानीमस्य प्रबन्धस्य स्वरूपं विचारयामः । कादम्बरीव कथाप्रबन्ध एवैषः । तल्लक्षणन्तूक्तं विश्वनाथेन । 'कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्। क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके। आदौ पद्यैर्नमस्कारः

खलादेर्वृत्तकीर्तनम् ।' इति। नेयमाख्यायिका। तदसाधारण चिह्नानां कविवंशकीर्तनवक्त्रापरवक्त्रवृत्तनिवेशनमुखगतभ व्यर्थसूचनादीनामत्रादर्शनात् । परे तु, गद्यप्रबन्धेष्वीदृशं व्य वहारभेदमसहमानाः कथा, कथानक, कथालिका, आख्यान आख्यायिका, शब्दैरेक एव गद्यप्रबन्धो यथारुचि व्यवह्रिय इत्याहुः। अयोगप्रवासविप्रलम्भाभ्यां परिपोषितस्संभोगशृङ्ग रोऽत्र रसः। इतिवृत्तन्तु कविकल्पितम्। न बृहत्कथारूढम नाम्नैव साम्यमेतत्कथानायिकायाः बृहत्कथाप्रतिपादिताय वासवदत्तायाश्च । इदञ्च तत्त्वं कविरेवात्र शुकोक्तिव्याजा दाविश्चकार । यथा 'भद्रे मुञ्च कोपम् । अपूर्वा बृहत्कथ प्रत्यक्षीकृता मया। तेनायं कालातिपातः' इति । गद्यन्त मुक्तकं, वृत्तगन्धि, उत्कलिका, चूर्णकं, इति चतुर्धा । तत्र आद्यं समासरहितम्। द्वितीयं श्लोकपादाकारम् । तृतीयन्त दीर्घसमासाढ्यम्। तुर्यन्त्वल्पसमासकम् । अत्र प्रायेणोत्कलि कारूपाणि गद्यानि । कचित्कचिद्वृत्तगन्धीनि, चूर्णकस्वरू पाणि, चेति सहृदयैराकलनीयम् । इति ॥

सतां विधेयः, तट्टै, वाधूल, श्रीनिवाससूरिः,

शब्दालङ्कारविद्याभूषणः, कविशिखामणिः,

सारस्वतसारज्ञः ।

———— ,

AN

# INTRODUCTION TO VÂSAVADATTÂ.

OF

# SUBANDHU.



Prose origin.

THE object of linguistic expression is either to instruct the understanding by the communication of ideas, or to delight it by a succession of sweet sounds and agreeable fancies. For long these two functions remain undifferentiated, and when a society makes sufficient advancement, they begin to diverge, and two very distinct styles of expression result from this divergence Poetry aims at giving delight directly, and prose at instructing Their common origin will yet be seen in each trespassing on the domain of the other; for we find poetry instructing and prose giving delight. But this division of labour is, in all advanced societies, an accomplished fact.

Vernaculars.

Though there is such a division found in all advanced literatures, circumstances tend to over-develop one functionary organ and atrophy another. In this, as in every activity connected with an organism, use makes for growth, and the absence of it for decay and death. If in a country

the social functions are carried on in one langua and the artistic aims are satisfied by another, we m be prepared to look for the decay of the instrume of communication and an undue development of tl of artificial expression. Here in this country, from variety of causes, Sanskrit became the language o coterie of literati, and the business of common l including preaching and pleading in courts, was do in the numerous local dialects. Hence it was tl from the earliest times we do not find any pedestri prose cultivated in this country That great popul religious movement, *viz.*, Buddhism, chose a *prak* (*i.e.*, a local dialect) for its instrument, and Ne Hinduism the numerous vernaculars of the country.

Neglect of Sanskrit prose.

No doubt, during the Brahmana period prose w written, and that a very terse and ve good prose. We can rarely fi equally good prose as the prose some portions of the Upanishads, for simplicity, direc ness, earnestness, and rhythm, they have hard their equals in any literature. But there it ende The period of the Upanishads and the Brahmanas w far away in the dim ages of the past, running back more than a thousand years before Christ,—to a tin when all the great modern literatures and mode peoples had not even seen the light of day. But, sin then, consequent on the closer mingling of the Arya

and the Non-Aryan on the Indian soil, the mother-tongue of the diversified race ceased to be Sanskrit and the daily businesses of life ceased to be conducted thro' the medium of that tongue. Hence the old prose died out; and for long the literatii wrote, to their own delight and to the mystification of the many, works to their taste or interest in the Sanskrit tongue As taste, refinement and form were the things aimed at, verse was employed to the almost entire exclusion of prose. With the neglect of prose, those intellectual qualities which are concerned in the making of prose—*viz.*, level-headedness, judgment, sanity, reflection and the sense of utility, ceased to be valued to the requisite extent. The result is, we find among us a race highly intellectual indeed, very fastidious in taste and extremely subtle, but really wanting in judgment and sanity.

The so-called Sanskrit prose.

Thus it happens that, in Sanskrit, prose literature itself is only a variety of poetry—making a new departure only in the matter of rhythm. Sanskrit writers on poetics rightly include it under *Kavya literature*, and they find no other distinction between their *poetry* and their *prose*—*viz.*, their पद्य and their गद्य— than the mere formal one of the former being in regular measure and the latter in irregular rhythm. In no other respect do the two styles differ. The author of the

*Sahityadarpana* defines it merely as वृत्तबन्धोज्झितं गद्य which is nothing but a paraphrase of Dandin's definition, अपादः पदसङ्घातो गद्य. Therefore, in the matter o *Alamkara* and of general aim, Sanskrit prose does not differ from Sanskrit verse. It is altogether artificial and bombastic

The manner.

The want of the sense of proportion, which is the besetting sin of the Indian intellect, is seen here in its most glaring form. Without any regard to propriety of time, place or circumstance, every possible minor detail is given in all its fullness, and "no topic is let go" in the words of the fair translator of *Kādambari*, "till the author can squeeze no more from it." Dr. Cowell finds in it a resemblance to the *estilo culto* of Spanish literature. It abounds with double meanings and veiled allusions in the sentences, so that the reader is apt to be bewildered by the dazzling coruscations which keep flashing across his path. The observations are all commonplace and conventional, and the puns and the under-meanings chiefly refer to mythologic characters or to well-known poetical superstitions. The sententious wisdom of Sanskrit writers is, however, not absent in these, though it appears to greater advantage in their usual charming setting of limpid verse. But there is no profundity of thought or research. The abundant use of immense compounds is considered to be the chief characteristic of an important class of this kind of composition known as

उत्कलिकाप्रायं; the other varieties being मुक्तक, वृत्तगन्धि, and चूर्णक. Of these मुक्तकं is simple prose, and it is availed of in the course of a work to set off the preponderating effect of long-winding compounds; वृत्तगन्धि affects the rhythm and melody of verse, and चूर्णक attempts at a reconciliation between मुक्तक and उत्कलिकाप्राय. Perhaps, in the early days of prose composition, works were written in all the four styles; but somehow the full and melodious flow of the उत्कलिकाप्रायं took the fancy of the poets, and the extant prose works are all in it. In a sense, this artifice of crowding words in huge compounds minimise the etymological difficulties of a syntactical language like Sanskrit, and the ideas flow with all the ease that characterises an analytical language. To a foreigner and to the beginner, the form is repulsive indeed; but after some practice it will be found that Sanskrit prose is not as difficult a reading as European scholars generally take it to be. It has a charm and verve of its own. The chief fault that one has to find with Sanskrit prose works, does not lie so much with the manner as with the matter.

The matter

These works are extremely thin in action and life. They are monotonous by reason of the interminable descriptions of scenes strung together by a meagre thread of narrative. The descriptions themselves are fantastic and unreal,

containing long strings of comparisons often teeming with puns. Yet, in spite of their highly artificial, and, to the modern taste, their unattractive setting, many really poetical ideas are found imbedded in them. To a Hindu ear especially, the movement and the melody are peculiarly appealing.

Subandhu's prose.

One of the extant writers of this kind of prose is Subandhu, the author of Vasavadattâ. Bâna and Dandin are two other old writers that belong to the same school. What Kalidasa is to poetry and drama, Bâna is to romance. He has exhausted the possibilities of that species of composition in so far as it was possible for one in his age and in his condition Yet it is remarkable that, in spite of Bâna, Subandhu continues to be read and admired This shows the intrinsic worth of Subandhu. It is true that some of the passages in Kâdambari and Harshacharita bear evident traces of Vâsavadattâ. Perhaps Bâna took to cultivating this species of composition under the inspiration, if not under the direct teaching, and in emulation, of Subandhu himself. That he was quite familiar with, and an ardent admirer of, Subandhu's Vâsavadattâ, is clearly made known in his obvious and appreciative allusion to that work in his introductory verses to Harshacharita कवीनामगलद्दर्पो नून वासवदत्तया. It is the style and the form that must have attracted Bâna to

it and compelled him to pay this tribute of admiration. For Subandhu seems to have cared less for the working out of emotions and characters than for "ingenuity of diction." In the words of Mrs. Manning, "Puns are common in all Sanskrit literature, but Subandhu's work is described as a volume of puns. So to choose and dispose his diction as to render it susceptible of a diversity of interpretation, is the distinct aim of the author." Subandhu himself was quite conscious of his own distinction when he characterises his work as प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिर्निबन्ध. Thus we may take Subandhu's work as the model of this species of writing. Dandin, who preceded Bâna, wrote in a different style, and so did not catch the fancy of Bâna. It is Bâna, and through him Subandhu, that has given the law to the so-called Sanskrit prose down to modern times.

Subandhu the man.

As a rule, very little of the personal history of literary men is known in this country. A literary life itself is everywhere known to be colorless and plain. It should have been more so in a country like India where the hands of the society-clock but moved, if at all, so slowly. Whether living in a secluded village on the banks of the great rivers of Hindustan with their recurring floods and droughts, their majestic rush and their stagnation in the plains, or used to the not always

honourable and self-respecting publicity of court life in one of the many small kingdoms with which the old empire of Bharata, Rama or Yudhisthira was honey-combed, the Indian poet had a very uneventful life to lead. A few literary disputations in the royal presence, a few juvenile peccadilloes by the village water-ways or temples, and rare and distant visits on pilgrimage to the neighbouring shrines and holy waters, formed the routine of the lives of most of these people. The main business of their life seems to have been study and teaching and writing. What a pity that so much energy and so much literary talent was in most cases wasted upon mere inanities and useless fancies! Of Subandhu the man, we know next to nothing. He seems to have been a Brahmin, and had, as a votary, a greater partiality to Krishna, as may be inferred from the preferential tone in his invocation. No doubt, in those early days, the sectarianism of later India had not become pronounced. Even now, in the north, it is said that members of the same family may be found to worship different deities. Yet, from the numerous allusions to Vishnu and his avatars and from the preferential tone in his invocatory verses, one is led to think that Subandhu was a Vaishnava, though not in the modern sense of the term. From the numerous allusions to Mimamsa and the disputations between the Buddhists and the Mimamsakas we are led to imagine that he must have been a Mimam-

saka himself Indeed, Mr. Telang has, in his paper on *Subandhu* and *Kumarila,* striven to prove from the strength of these allusions that Subandhu must have lived in the generation after that in which great victories had been scored on the Buddhists by Kumarila and the Mimamsakas. That learned scholar has shown that this final contest between Buddhism and Hinduism must have taken place during the interval between Fa Hian's visit to India and that of Huen Thsang in the 7th century A. D. Therefore, in all probability, Subandhu himself was an ardent Mimamsaka and Vedic scholar. His recondite allusions to other sciences, such as grammar and logic, show that he was not unacquainted with them But it is noteworthy that there is no allusion to Advaitism or any of the other phases of Vedantism Yet one has to think that Subandhu must have been a mere worldly man with a taste for the pleasures of sensual life His choice of the subject in his romance, and the evident zest with which he describes the mere physical side of love, show that he had not passed the stage of a refined voluptuary. We do not find in all the work any suggestion of maturity of thought or refinement of feelings. Even the literary taste of our author does not seem to be above reproach. Expressions such as the following must take away from the reputation of our writer for taste and refinement. (1) महिषासम्भवोऽपि वृषोत्पादी, (2) आसन्नमरणास्विव जीवितेशपुराभिमुखेषु when

describing the sportive enjoyments of lovers, (3) प्रवृद्ध-गुल्मतया रोगीव दृश्यमानः, in the description of the Vindhya range, (4) ताभिः श्वित्रीव वियदशोभत, when he compares the starry sky to a leper. But in this he was perhaps in no way worse than his age. If one has to go away with the impressions which one receives from the romances and the Sanskrit plays, one cannot but think that the state of society must then have been very wretched indeed. Dissoluteness of every description was the one business of life among the high and the low. Taste and refinement meant little more than sensuality. But we know otherwise that this was not the whole of the matter. Only this was the subject that interested the poets most. For there was also deep scholarship of a solid kind in the Sastras in those days there was also the quiet preparation for the philosophy and philanthropy of the later schools of Vedantism in Sankara and in Ramanuja. Above all, there was the slow Aryanisation and the development of the common people in the vast areas that had been subjugated by Aryanism, and the establishment of temples, religions and litanies It was altogether a very active epoch—the one that preceded the advent of Huen Thsang—in which Subandhu seems to have lived and worked. But Subandhu himself, if we can judge from what is left by him in his Vásavadattá, took little or no active interest in all this. He was merely a voluptuary and visionary poet that had

the graces of writing. In calling himself सरस्वतीदत्त-वरप्रसाद: he has signified that he was not even a deep and laborious scholar But it is clear he was neither a Buddhist himself nor a friend of Buddhists. This is, perhaps, all that he means when he says that he is सुजनैकबन्धु.. The choice of the style and his allusions to music would make one think that Subandhu was a practical musician himself, or at least was a lover of music, and was also, to some extent, aquainted with the technique of it (*Cf.* रागराज इव उल्लसितरति·)

Subandhu's Date.

From the clear reference to Vâsavadattâ in Bâna's *Harshacharita*, we get an interior limit for the date of Subandhu. For Bâna is well known to have flourished in the court of Harshavardhana Siladitya, King of Kanouj, during the first half of the seventh century A.D. The late Mr. Telang has striven to show that he must have lived in the latter half of the 6th century in the generation after the defeat of Buddhism at the hands of the reviving school of Mimamsakas. For his references to the conflict of Mimamsa and Buddhism would not have been quite popular if he had lived long after that conflict. *Cf.* केचिज्जैमिनिमतानुसारिण इव तथागतमतध्वसिनः। श्रुतिवचनमिव परिहृतदिगम्बरदर्शनं। मीमांसक-दर्शनेनेव तिरस्कृतदिगम्बरदर्शनेन रजसा जजृम्भे ॥ He could not have lived earlier because it is known that neither Jaimini, the author of the Mimamsa Sutras, nor

Sabara-swami his great commentator, had any such contest with Buddhism. It was Kumarila Bhatta, the precursor of Sankara, that had a deadly contest with the Buddhists. This contest and defeat appears to have taken place during the first half of the sixth century, when great Buddhist scholars, such as Dharmakirti, Vasabandhu, Asanga and Dignâga, were flourishing Mr Max Muller has clearly shown in his *India What it can teach us?* that these writers were contemporaries, it was then that Fa Hian visited India Subandhu himself refers to an Alankara Sastra written by Dharmakirti Hence we have to assign for our author a date not much anterior to that of Bána The story of Vásavadattá itself is a very old story It was known even in the time of Patanjali, and perhaps earlier Prof Bhandarkar has established beyond doubt the date of Patanjali as the second century B C Patanjali, in his *Mahabhashya*, commenting on the Sutra क्रतूक्थादिसूत्रान्ताट्ठक् । adds the *vartika* अख्यानाख्यायिकेतिहासपुराणेभ्यश्च ॥ and illustrates it by the example वासवदत्तिक in the sense of one who studies the romance of Vasavadattà This clearly indicates that, in Patanjali's time, there were romances on the fortunes of Vàsavadattá It cannot refer to our Vasavadatta, because in this we find clear references to the *Brihatkatha* of Gunàdhya, which was written only in the first century A D. during the reign of Sàtavàhana. Moreover, the story of Vàsavadattà, as

given by Subandhu, bears no resemblance to the one given in *Brihatkatha* and populary known. In the popular romance she married Vatsaraja, and the manner of the wooing and winning was altogether different Subandhu himself was not unacquainted with the whole story, for, in his days, Gunàdhya's *Brihatkatha* should have been extant, and he refers to some of the characters in it, *e.g*, Naravahanadattá, Priyamgu and Syàmà In the sloka, सारसवत्ता विहता नवका विलसन्ति चरति नो कङ्क· । सरसीव कीर्तिशेष गतवति भुवि विक्रमादित्ये । we have clear indication of the time of Subandhu For the poet speaks as if the death of Vikramàditya has taken place but recently Who this Vikramàditya was we must find out from archæologial and other evidence. Certainly, we have not here the old Vikramàditya in whose court flourished Kàlidàsa But the Vikramàditya that lent credit to Mr. Fergusson's Korur theory, might be the one intended The grandfather of Harshavardhana Siladitya is also known as Harsha, and the *Rajataramgini* mentions him by name. It was in his time that the Saka incursions became troublesome Subandhu himself was acquainted with the Sàkyas, for he describes them as having a partiality for red dress (शाक्य इव रक्तांशुकधर·) Alburuni speaks of the battle of Korur and the victor Vikramaditya in the 6th century A. D If the battle of Korur (second ?) was fought about 514 A D and the victor Vikramaditya died a few years after that, the

feeling reference to his memory by a poet who had been [illegible] in the latter half of the sixth century, will be quite in place Thus, all the collateral evidences that throw light on Subandhu's date, will be in coherence In fine, we may take the period between 540-570 A D as the most probable one for the time of Subandhu

From the author let us now pass to the work

Vâsavadattâ

That the story of Vâsavadattâ has long been a popular favorite, is already mentioned The popularity has passed out of Sanskrit literature itself. For Thirumangamannan, one of the Sri Vaishnava Alwars who wrote the Tamil Prabandham, mentions her by name What attracted so much popular feeling towards her, was her character and the romantic adventures of her life. In all probability, she was an historical character whom the myth-making tendencies of that time raised into a romantic heroine The story of Vasavadattá, as primarily given by Gunâdhya and subsequently by Somadeva in his *Kathasaritsâgara*, is entirely different from what Subandhu has given to us Subandhu explicitly states that his is an अपूर्वाबृहत्कथा ।, an altogether original *Brihatkatha* i e, possessing all the sentiment and beauty of *Brihatkatha* but following an altogether new plan The parrot that narrates the story, moreover, adds that it was actually witnessed by it (प्रत्यक्षीकृता) in allusion, perhaps, to the mere hearsay *Brihat-*

*katha*, which all the feathered tribe had heard from the lips of Gunâdhya when, according to the version of the *Kathâsaritsâgara*, he read out portions of it to the wind and birds and beasts in the lonely deserts of Vindhya's wilderness, and consigned the precious leaves of his immortal work to the flames, stung by the indifference and neglect of the reigning monarch and the jealousy of his literary courtiers.

The old version

According to the *Brihatkatha*, Vâsavadattâ was a daughter of the king of Ujjain. Her father made up his mind to give her in marriage to Vatsaraja, the fair king of Kausambi. Communications passed between the potentates concerning the match, but the haughty king of Kausambi would not consent to go to Ujjain to receive his bride, but demanded her to be sent to him with a suitable escort. But the father of Vasavadatta contrived to take Vatsa captive by means of a wooden elephant within which armed force was kept concealed, and which was left on the bordering wilds between their kingdoms so as to attract the attention of King Vasta famous as an A. I *Shikari*. The captive prince was confined in Ujjain; and the king wanted to learn from him a charm that he was credited to know, wherewith he was able to subdue elephants. But Vatsa's demands as to the formalities to be observed in learning it of him were too humiliating to an independent monarch like the King of Ujjain,

and so he made his fair daughter the pliant disciple that Prince Vatsa wanted. With a screen between the youths the lectures began, and in course of time it ended in their mutual falling in love and their elopement. This meagre account is enough to show how much the story, as given by Subandhu, diverges from the traditionary version. In fact, there is nothing in common between the two, except the name of the heroine and the prevailing romantic sentiment It cannot be said that Subandhu has improved upon the old account by his treatment of it He has merely elevated it altogether into the realm of the unreal and the fantastic. Instead of being a picture of life, it has become a mere ideal phantasy. Perhaps the old romance of Aniruddha and Usha suggested (as a modification) to him and his metaphysical mind the thought that in such a union the freaks of the Creator might be better exemplified (अहो प्रजापते रूपनिर्माणकौशल). Two people, a fair youth and a fair maid, see and love each other in dreams they meet, they elope, and the lady disappears miraculously. The hero raves and resolves to kill himself, when lo! magically the heroine appears and narrates the story of her unexpected loss and her miraculous restoration. In all this, there is not one incident that has any resemblance to real life Hence there is no moral value in the plot To a modern reader, therefore, there is little to attract in this except the form, and the form, too, is, to our

discursive age, not wholy palatable If we shall have any of the romances written in Sanskrit, we would keep *Kâdambari* and consign the rest to the back-shelves of our library Bâna was aware of the qualities that must grace a true romance

नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम् ॥

This ideal has been reached in his *Kâdambari*, and *Kâdambari* alone, among all the numerous products of that artificial age Bâna also has a graceful style; for he passes as a special representative of the Panchali style whose characteristic is "a sweet soft flow characterised by vigour (ओजस्) and elegance (कान्तिः) with compounds of not more than five or six words"

G. Kasturiranga Aiyangar



श्रीगुरुभ्यो नमः ।

# ॥ वासवदत्ता ॥

**करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ।**
**पश्यन्ति सूक्ष्ममतयस्सा जयति सरस्वती देवी ॥ १ ॥**

प्रारिप्सितस्य ग्रन्थस्याविघ्नपरिसमाप्तये कृत मङ्गल शिष्यशिक्षार्थं निबध्नाति । **करबदरेति** ॥ सूक्ष्मा अतिदुरूहार्थतत्वावधारणेऽप्यप्रतिहत-प्रसरा मति. बुद्धि येषां ते तादृशा', कवयः रसवत्तरशब्दार्थसन्दर्भनिर्माण-चतुराः पण्डिताः, यस्या', प्रसादतः अनुग्रहात्, अखिल समग्र, भुवन-तल जगन्मण्डल, (भुवनतलस्थ समस्त वस्तुजातमिति यावत्) करबद-रेण करतलकलितबदरीफलेन सदृश सम यथा तथा, पश्यन्ति जानन्ति, (अत्र दृशेर्ज्ञानसामान्यार्थकत्वम्) सा तादृशी, देवी सरस्वती वाग्देवी, जय-ति सर्वोत्कर्षेण वर्तते । 'जि जये' अकर्मक. । अर्थान्तरन्तु । सूक्ष्मा अल्पा (विवेचनशक्तिविकलेति यावत्) तादृशी मति' येषां ते तादृशा', कवय. जलपक्षिणः, 'क शिरोऽम्बुनो.' 'विविष्किरपतत्रयः' इति चामरः । यत्प्रसादतः यस्याः नद्याः प्रसादतः नैर्मल्यात्, (हेतो') अखिल, भुवन-तलं जलप्रदेशं, (जलावपूरितमगाधतलमित्यर्थः) 'जीवनं भुवन वनम्'

खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः ।
भरभुग्नवितथबाहुषु गोपेषु हसन् हरिर्जयति ॥ २ ॥

कठिनतरदामवेष्टनलेखासन्देहदायिनो यस्य ।
राजन्ति वलिविभङ्गाः स पातु दामोदरो भवतः ॥ ३ ॥

---

इत्यमरः । कस्य जलस्य यो लवः लेशः यस्मिस्तत् तेन दरसदृश ईषत्सम, यद्वा कलवस्य यो दर ईषद्दश यस्मिस्तत् तेन सदृश (महाजलभारितमपि ह्रदादिक तद्गतजलनैर्मल्यात् परिमितजलप्रदेशमिवेत्यर्थ ) रलयोर्वबयोश्चाभेद इति कविसमयविदः । पश्यन्ति । सा तादृशनैर्मल्यशैशिर्यपारिशुध्यादिना प्रसिद्धा, देवी द्युतिमती देवसम्बन्धिनी वा, सरस्वती तन्नाम्नी नदी जयति । **पथ्यार्या** वृत्तम् । 'त्रिष्वंशकेषु पादो दळयोराद्येषु दृश्यते यस्याः । पथ्येति नाम तस्या छन्दोविद्भिस्समाख्यातम्' इति लक्षणात् । **प्रकृताप्रकृतविषयकः श्लेषालंकारः** ॥

**खिन्नोऽसीति** । हे कृष्ण, खिन्नः श्रान्त , असि । (गिरिधरणादिति भावः) । शैल असहायेन त्वया ध्रियमाण इम गोवर्धनाद्रि, मुञ्च धर्तव्यत्वेनास्मासु निक्षिप । वयं, बिभृमः धराम । इति, गोपेषु पशुपालेषु, वदत्सु कथयत्सु सत्सु, शिथिलभुजः श्लथबाहु , पश्चात्, तेष्वेव, भरेण पर्वतभारेण भुग्नाः कुटिलाः अत एव वितथाः व्यर्थाः बाहव भुजाः येषां तेषु तादृशेषु सत्सु, हसन् तेषा शैलधारणविषयकासामर्थ्याभिव्यञ्जक हास कुर्वन्, हरिः श्रीकृष्णः, जयति ॥ 'भरभुग्नविततबाहुषु' इत्यपि पाठ । **केवलेष्ठानवाभिरूपो विषमालंकारभेदः** ॥ **पथ्यार्या** वृत्तम् ॥ २ ॥

**कठिनेति** । कठिनतर अतिनिबिडं यद्दामवेष्टन यशोदापाशकलित रज्जुबन्धन तेन जायमानाः याः रेखाः तत्सन्देहदायिनस्तन्नः

स जयति हिमकरलेखा चकास्ति यस्योमयोत्कया निहिता।
नयनप्रदीपकज्जलजिघृक्षया रजतशुक्तिरिव ॥ ४ ॥

भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य ।
वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्द्योतः ॥ ५ ॥

---

यस्य भगवतः (सम्बन्धिनः) वलिविभङ्गाः कुक्षिस्थाः त्रिवलीतरङ्गाः, राजन्ति प्रकाशन्ते । स तादृशः, दामोदरः श्रीकृष्णः, भवतः युष्मान्, पातु रक्षतु । दामोदरेण वामनरूपेण विष्णुना कृताः बलेः वैरोचनेरसुरस्य भङ्गाः पराजया इत्यप्यर्थान्तरप्रतीतिः । लेखाः देवाः तेषां असन्देह-दायिनः इत्यपि पक्षान्तरे अर्थो वर्णनीयः । **पथ्यार्या** वृत्तम् । **ससन्देहालंकारः । उत्प्रेक्षा च** ॥ ३ ॥

**स जयतीति** । यस्य यत्सम्बन्धिनी, हिमकरलेखा शिरस्स्थिता चन्द्रलेखा (कर्त्री) उत्कया उत्सुकया उमया पार्वत्या, नयनप्रदीपस्य दीपवत्प्रज्वलतो ललाटनेत्राग्नेः, यत् कज्जलं उपरि पुञ्जीभवितुं योग्यं, तस्य जिघृक्षया ग्रहणेच्छया, निहिता उपरि निक्षिप्ता, रजतशुक्तिरिव, चकास्ति प्रकाशते । सः ईश्वरः, जयति सर्वोत्कर्षेण वर्तते ॥ **रूपकानुप्राणितोत्प्रेक्षालंकारः । पथ्यार्या** वृत्तम ॥ ४ ॥

**भवतीति** । विस्तारिताः प्रख्यापिताः परेषां अन्येषां गुणाः येन सः, तस्य सुजनस्य साधुजनस्य, सुभगत्वं सौभाग्यं महिमा वा, अधिकं अपरिमितं, भवति । असूयाविरहेणान्यदीयान् गुणान् यथावद्भणितं प्रशंसतां साधूनां महिमातिशयः स्वयमेव सिध्यतीत्येतत्सर्वानुभवसिद्धम् । एतदेव विशेषमुखेन समर्थयते। वहतीति । विकासितानि विकस्वरतामापादितानि कुमुदानि कैरवाणि येन सः, तादृशः हिमकरोद्द्योतः चन्द्रप्रकाशः (चन्द्रिकेति यावत्) द्विगुणरुचिं पूर्वापेक्षया अधिकतरां शोभां, वहति बिभर्ति । **अर्थान्तरन्यासालंकारः** ॥ **पथ्यार्या** वृत्तम् ॥ ५ ॥

विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः ।
यदयं न कुलद्वेषी स कुलद्वेषी पुनः पिशुनः ॥ ६ ॥
अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते चक्षुः ॥ ७ ॥
विध्वस्तपरगुणानां भवति खलानामतीव मलिनत्वम् ।
अन्तरितशशिरुचामपि सलिलमुचां मलिनिमाऽभ्यधिकः॥८॥

---

**विषधरत इति** । विद्वांसः पण्डिताः, (कर्तारः) खल दुर्जनः, विषधरतोऽपि सर्पादपि, अतिविषमः अतिक्रूरः, इति, वदन्ति कथयन्ति । एतत् न मृषा न मिथ्या । अपि तु तथ्यमेवेत्यर्थः । यत् यस्मात्, अयं सर्पः, न कुलद्वेषी न स्ववर्ग्यविद्वेषणशीलः, किन्तु यः पादादिना स्वमाक्रामति तमेवामर्षणो दशति । नकुलः द्वेषी शत्रुः यस्येत्यपि । सः प्रसिद्धः, पिशुनः खलः पुनः, कुलद्वेषी स्ववश्यविरोधी कुलीनद्वेषी वा । **वाक्यार्थहेतुकं काव्यलिंगं** अलङ्कारः । **व्यतिरेकश्च । पथ्यार्या** ॥ ६ ॥

**अतीति** । अतिमलिने अतिगर्हिते, कर्तव्ये कार्ये, (विषये) खलानां दुर्जनानां, धीः मतिः, अतीव अत्यन्त, निपुणा समर्था, भवति । अत्र दृष्टान्तमाह । तिमिर इति । कौशिकानां उलूकानां, चक्षुः नेत्रं, तिमिरे अन्धकारे हि, रूपं स्वविषयं, प्रतिपद्यते गृह्णाति । (यद्वा रूपं विषयग्राहकसामर्थ्यरूपं स्वभावं) प्रतिपद्यते प्राप्नोति । **अर्थान्तरन्यासः । दृष्टान्तश्च ॥ पथ्यार्या ॥**

**विध्वस्तेति** । विध्वस्ताः विनाशिताः दूषिता वा परगुणाः अन्यदीयगुणाः यैस्ते तेषां, खलानां दुर्जनानां, मलिनत्वं मालिन्यं, अतीव, भवति । दृष्टान्तमाह । अन्तरितेति । अन्तरिताः आच्छादिताः शशिरुचः चन्द्रमरीचयः यैस्ते, तादृशानामपि, सलिलमुचां वार्षिकमे-

हस्त इव भूतिमलिनो यथा यथा लङ्घयति खलस्सुजनम् ।
दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥ ९ ॥
सारसवत्ता विहता न वका विलसन्ति चरति नो कङ्कः ।
सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये ॥ १० ॥

घाना, मलिनिमा कार्ण्य, अभ्यधिक अमित । **दृष्टान्तः** । **पथ्यार्या** ॥

हस्त इवेति । भूत्या भस्मना मलिन· धूसरः, हस्त इव, भूत्या-उत्पत्त्या मलिन. (आजानकलुषहृदय इति यावत्) खल. दुर्जन, सुजन साधुजन, यथा यथा येन येन प्रकारेण, लघयति दूषयति । त तादृशसाधु, दर्पणमिव मुकुरमिव, तथा तथा तेन तेन प्रकारेण, निर्मलच्छाय निष्कल्मषस्वभाव, दर्पणपक्षे तु, निर्मला मलरहिता (शुद्धेति यावत्) तादृशी छाया कान्ति यस्य तत् तादृश इत्यर्थो वर्णनीय. । कुरुते विदधाति । यथा वा मलोपहत मुकुरतल भस्मानुलिप्तकरतल-परामृष्ट रात्स्वमल हस्ते सक्रमय्य स्वय शुद्ध भवति । एवमेव दोपलेशा-क्रान्ता अपि साधवो दुर्जनैर्दूष्यमाणा· स्वदोष तेष्वेव सङ्क्रमय्य स्वय शुद्धा भावन्ति । इति भावः । **श्लिष्टोपमा** । **पथ्यार्या** वृत्तम् ॥

इदानीं कविर्विद्वत्पक्षपातिनो धार्मिकान् भूपान् प्राक्तनाननुशो-चति । **सेति** । सरसि तटाक इव, विक्रमादित्ये विक्रमभूपाले, भुवि अवनौ, कीर्तिशेष यशश्शेष, (कालधर्म इति यावत्) (तटाकपक्षे) जलाभावेन कर्दममात्रावशेष, गतवति प्राप्ते सति, सा तादृशी, रसवत्ता वीर्यवत्ता रसिकता वा, विहता विनष्टा । नवकाः अनुकम्पायां कन् अनुकम्पार्हा नवीना. अनिक्षुद्राः राजानः, विलसन्ति समन्तात् प्रकाशन्ते । क·, कं, नो चरति न भक्षयति इति काकुः 'चर गतिभक्षणयोः' दुर्बलसरक्षकस्य राज्ञो विरहे सर्वोऽपि स्वस्वबलानुगुण्येन सर्व दुर्बल पीडयतीति भाव· । सरः पक्षे तु, सारसाः जलपक्षिविशेषाः यद्वा सारसानि पद्मानि ते तानि वा अस्मिन्

अविदितगुणाऽपि सत्कविफणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमळापि हि हरति दृशं मालतीमाला ॥ ११ ॥
गुणिनामपि निजरूपप्रतिपत्तिः परत एव सम्भवति ।
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥ १२ ॥

---

सन्तीति सारसवन् तस्य भावः सारसवत्ता, सा, विहृता नष्टा । वबयोरभेदात् बका न विलसन्ति । कङ्कः लोहपृष्ठश्च, नो चरति । केचित्तु अत्र काकाऽर्थान्तरं वर्णयन्ति । यथा बका न विलसन्ति । कङ्कः नो चरति । विलसन्ति चरन्त्येवेत्यर्थः (मत्स्यग्रहणार्थमिति भावः) **श्लिष्टोपमा** । **पथ्यार्या** ॥

इदानीं कविस्सुकविफणितीः प्रशंसति । **अविदितेत्यादिना** ॥ सत्कवीनां रमणीयशब्दार्थरचनानिपुणानां कवीनां फणितिः वाक्, (प्रबन्धरूपेति यावत्) अविदिता अज्ञाता गुणाः ओजःप्रसादमाधुर्यादयः यस्यास्सा तादृश्यपि, कर्णेषु श्रोतृणां सहृदयानां श्रवणपुटेषु, मधुधारां क्षौद्रधारां (तद्गतमाधुर्यसदृशमाधुर्यविशेषमित्यर्थः) वमति उद्गिरति । दृष्टान्तमाह । अनधिगतेति । मालतीमाला जातीकुसुमगुम्फिता माला, अनधिगतः अविदितः (अनाघ्रात इति यावत्) परिमलः सौरभ्यं यस्यास्सा तादृश्यपि, दृशं द्रष्टृणां नेत्राणि, हरति हि स्वकीयसौन्दर्येण क्षणेन स्ववशीकरोति खलु । **दृष्टान्तालंकारः । पथ्यार्या** ॥

**गुणिनामिति** । गुणिनां रसवत्तरशब्दार्थसघटनचातुर्यरूपगुणशालिनामपि सहृदयानां, निजरूपप्रतिपत्तिः स्वरूपपरिज्ञानं, परत एव परस्मादेव, सम्भवति उत्पद्यते । तेन निर्गुणानां स्वरूपपरिज्ञानं परस्मादित्यत्र किमु वक्तव्यं । यस्मात् यतः, अक्ष्णोः चक्षुषोः स्वमहिमदर्शनं स्वस्य यो महिमा विस्तारदैर्घ्यकाळकळ्यसौन्दर्यादिरूपः, तस्य

सरस्वतीदत्तवरप्रसादश्चक्रे सुबन्धुस्सुजनैकबन्धुः ।
प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिर्निबन्धम् ॥ १३ ॥

अभूदभूतपूर्वः सर्वोर्वीपतिचक्रचारुचूडामणिश्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणिः, नृसिंह इव दर्शित हिरण्यकशिपुक्षेत्रदानविस्मयः, कृष्ण इव कृतवसुदेवतर्पणः, नारायण इव सौकर्यसमासादितधरणिमण्डलः, कंसारातिरिव जनितयशोदानन्दसमृद्धिः, आनकदुन्दुभिरिव कृतकाव्यादरः, सागरशायीवानन्तभोगिचूडामणिमरीचिरञ्जित-

दर्शन अवलोकन, मुकुरतले आदर्शप्रदेश एव, जायते। सर्वदर्शनक्षमयोरपि नेत्रयो. स्वमहत्त्वदर्शन दर्पणाधीनमेवेत्यर्थ । **काव्यलिंगं** ॥ **अर्थान्तरन्यासश्च । पथ्यार्या** ॥

**सरस्वतीति** । सरस्वत्या वाग्देव्या (कर्त्र्या) दत्तेन वरेण समुत्पन्न· प्रसाद प्रसन्नता यस्य सः तादृश, (देवतानुग्रहसमुत्पन्नानितरसाधारणमेधाबल इत्यर्थ·, एतेन बहुगुरुसकाशाच्चिरपरिश्रमेण विद्यामभ्यस्य पुन.पुनर्मननपठनपाठनादिभि अधीतविद्यादार्ढ्याय प्रयस्यद्भ्यः हठात्कतिचित्पदानि समाकृष्य श्लोकनिबन्धनविडबनामाचरद्भ्यस्सामान्यकविभ्योऽस्य व्यावृत्तिरुक्ता । सुजनाना साधूना एकबन्धु अद्वितीयसुहृत्, किं च, अक्षरे अक्षरे प्रत्यक्षर श्लेषमय श्लेषप्रचुर; य. प्रबन्ध. तस्य विन्यासे रचनायां यानि वैदग्ध्यानि चातुर्याणि तेषा निधिः शेवधि·, सुबन्धु तन्नामा कवि., निबन्ध वासव त्ताख्य एत प्रबन्धं, चक्रे । **परिकरः** । वृत्त **उपजातिः** ॥

**अभूदित्यादि** । चिन्तामणिर्नाम राजा अभूदिति योजना ।

पादपद्मः, वरुण इवाशान्तरक्षणः, अगस्त्य इव दक्षिणाशाप्रसाधकः, जलनिधिरिव वाहिनीशतनायकः, समकरप्रचारश्च, हर इव महासेनानुगतो निवर्तितमारश्च, मेरुरिव विबुधालयो विश्वकर्माश्रयश्च। रविरिव क्षणदानप्रियः छायासन्तापहरश्च, कुसुमकेतुरिव जनितानिरुद्धसम्पत् रतिसुखप्रदश्च, विद्याधरोऽपि सुमनाः, धृतराष्ट्रोऽपि गुणप्रियः, क्षमानुगतोऽपि सुधर्माश्रितः, बृहन्नळानुभावोऽप्यन्तस्सरळः, माहिषीसम्भवोऽपि वृषोत्पादी, अतरळोऽपि महानायकः, राजा, चिन्तामणिर्नाम ॥

---

स कीदृगित्यत आह। अभूतपूर्व इत्यादिना। पूर्वं भूत भूतपूर्वः स न भवतीत्यभूतपूर्वः, 'भूतपूर्वे चरट्' इति निपातनात्पूर्वशब्दस्य परनिपातः। सर्वेषां उर्वीपतीनां राज्ञा चक्रस्य मण्डलस्य (सम्बन्धिनी) या चूडामणिश्रेणी मकुटरत्नराजिः सैव शाणः घर्षणोपल तस्य कोणे एकस्मिन् प्रदेशे कषणेन सङ्घर्षणेन निर्मलीकृताः शुद्धिमापादिताः चरणनखमणयः पादनखररत्नानि यस्य सः तादृशः, नृसिंह. प्रह्लादाख्यभक्तरक्षणाय स्तम्भात्प्रादुर्भूतः कण्ठादुपरिकण्ठीरवरूपधारी भगवदवतारभेदः स इव, दर्शितः हिरण्यानां सुवर्णानां कशिपूनां अन्नादीनां क्षेत्राणां सस्याभिवृद्धिक्षमाणां भुवां च दानेन वितरणेन विस्मय. येन सः, (पक्षे) दर्शितः हिरण्यकशिपोः तन्नाम्नोऽसुरभूपतेः क्षेत्रस्य देहस्य दानेन दारणेन विस्मय अद्भुतरस येन सः, कृष्ण. वासुदेव. स इव, कृत कल्पित वसुभि. यागादिषु विनियुक्तैर्धनैः देवानां तर्पण तृप्ति येन सः (पक्षे) कृतं वसुदेवस्य तदाख्यस्य पितुः तृप्तिः येन, नारायण. विष्णुः स इव, सौकर्येण अनायासेन समासादित आक्रान्त धरणिमण्डल येन सः, (पक्षे)

सूकरस्य भाव: सौकर्यं तेन समासादित उद्धृतं धरणिमण्डल प्रलयजलधि-निमग्नभूवलय येन सः । कसाराति. श्रीकृष्णः स इव, जानिता उत्पादिता यशः ख्यातिः दा दान तयो· आनन्दसमृद्धि· यस्य (पक्षे) जनिता यशोदा नन्दयो. तन्नाम्नोः मातापित्रोः समृद्धि येन । आनकदुन्दुभि. वसुदेवः स इव, कृतः काव्येषु रसवत्तरप्रबन्धेषु आदरः येन, यद्वा कृतकाव्येषु कविषु आदर. यस्य, (पक्षे) कृत काव्याया पूतनाया· दर त्रासः येन । सागरशायी नारायणः स इव, अनन्ताः अनेके ये भोगिन राजान तेषा चूडामणिमरीचिभि शिरोरत्नप्रभाभि रञ्जितपादपद्म अलङ्कृत-चरणारविन्द., (समृद्धैस्सर्वैरपि नृपतिभिस्सेव्य इत्यर्थः) पक्षे, अनन्त. तन्नामा भोगी सर्प । अन्यत्सुगमम् । वरुणः जलाधिदेवता, स इव, अशान्त अविच्छिन्न रक्षण यस्य, (पक्षे) आशाया. पश्चिमदिशः अन्तस्य पर्यन्तभूमे. रक्षण यस्य, अगस्त्यः मैत्रावरुणि· स इव, दक्षिणायां या आशा अर्थिना वाञ्छा तत्प्रसाधक· तन्निर्वर्तक·, दक्षिणानां समर्थाना आशायाः मनोरथस्य प्रसाधको वा, (पक्षे) दक्षिणाशाया. अपाच्या दिश प्रसाधक अलङ्कर्ता । जलनिधि· समुद्र स इव, वाहिनीना सेनाना शतस्य नायक नेता, (पक्षे) वाहिनीशतस्य नदीशतस्य नायक । सम. अन्यूनाधिक करस्य राजग्राह्यस्य भागस्य प्रचार. यस्य (पक्षे) मकराणां ग्राहाणा प्रचारेण सहित. । हरः रुद्र. स इव, महत्या सेनया अनुगतः, निवर्तित ध्वस्त मारयतीति मार. विघ्न शत्रुर्वा येन (पक्षे) महा-सेनेन सुब्रह्मण्येन अनुगतः, निवर्तित. नाशित· मारः मन्मथः येन सः । मेरु हेमाद्रि स इव, विबुधानां पण्डितानां आलयः आवासः, तदाद-र्तेत्यर्थः । विश्वेषां कर्मणां आश्रयः (पक्षे) देवानामावासः, विश्वकर्मा तन्नामा देवशिल्पी तदाश्रयः । रविः सूर्य· स इव, क्षणेषु उत्सवेषु दान धनवसनादिवितरण प्रिय यस्य, छायया स्वदेहप्रभया सन्तापहरः दुःखापनोदकः [ एतद्देहकान्तेराह्लादजनकत्वादिति भावः ] ( पक्षे, ) क्षणदा रात्रिः तस्याः न प्रियः । नञर्थकस्य न शब्दस्य सुप्सुपेति

यत्र च शासति धरणिमण्डलं छलनिग्रहप्रयोगो न्यायेषु, नास्तिकता चार्वाकेषु, कण्टकयोगो योगेषु, परीवादो वीणासु, खलसंप्रयोगः शालिषु, द्विजिह्वसंगृहीतिः आहितुण्डिकेषु, करच्छेदः कुड्मळग्रहणेषु, नेत्रोत्पाटनं मुनीनां,

---

समासः । छाया तन्नाम्नी स्वभार्या तस्याः सन्तापहरः । कुसुमकेतुः मदनः स इव जनिता उत्पादिता अनिरुद्धा अनिवारिता सपत् श्रीः यस्य, रत्या (कामतन्त्रनिपुणत्वात्) सुखप्रदः प्रमदानामानन्दप्रदः, (पक्षे,) जनिता अनिरुद्धस्य उत्पादनेः सम्पत् येन, अत्र पक्षे मन्मथावतारभूतः कृष्णसूनुः प्रद्युम्न एव कुसुमकेतुशब्देन निर्दिश्यते । रतेः स्वपत्न्याः सुखप्रदश्च । विरोधाभासेनाह । विद्याधरोऽपि देवयोनिविशेषोऽपि, सुमनाः देव इति विरोधः, परिहारस्तु, विद्याश्चतुर्दश विद्याः तासां धरः, सु शोभनं मनः यस्य सः तादृशः । धृतराष्ट्रोऽपि पाण्डोरग्रजोऽपि, गुणप्रियः भीमसेनाप्रियः इति विरोधः, परिहारस्तु धृतराष्ट्रो धृतराज्यः, गुणप्रियः सन्धिविग्रहादिषड्गुणप्रियश्च, गुणपक्षपाती वा । क्षमा भूमिं अनुगतः आश्रितोऽपि सुधर्मां देवसभां आश्रितः, परिहारस्तु, क्षमां शान्ति अनुगतः, सुधर्मान् शोभनान् धर्मान् आश्रितः । बृहन् महान् यो नडः तृणस्तदः तस्यैवानुभावो यस्य तादृशोऽपि अन्तः मध्ये सरळः पीतद्रुः इति विरोधः । बृहन्नळा अर्जुनः तस्यैवानुभावो यस्य, अन्तः हृदये सरळः सारल्ययुक्तश्चेति परिहारः । महिषी सैरिभी तस्याः सम्भवो यस्य तादृशोऽपि, वृषोत्पादो वृषभोत्पादक इति विरोधः, महिष्याः कृताभिषेकायास्सम्भवो यस्य तादृशः, सुकृतजनकश्चेति परिहारः । अतरळोऽपि हारमध्यस्थरत्नभिन्नोऽपि महानायकः महामध्यमणिरिति विरोधः, अचञ्चलस्वभावः, महान् नेतेति परिहारः ॥

**यत्रचेति** ॥ यत्र यस्मिन् चिन्तामणिनाम्नि राज्ञि, धरणिमण्डलं

राजविरुद्धता पङ्कजानां, सार्वभौमयोगो दिग्गजानाम्, अग्नितुलाशुद्धिः सुवर्णानां, सूचीभेदो मणीनां, शूलभङ्गो युवतिनवप्रसवेषु, दुश्शासनदर्शनं महाभारते, करपत्रविदारणं जलजानां, परमेवं व्यवस्थितम् ।

---

भुवं, शासति रक्षति सति, छल अभिप्रायान्तरेण प्रयुक्तस्य अर्थान्तरं परिकल्प्य दूषण, निग्रहः प्रतिज्ञाहान्यादिः तेषां प्रयोगः, न्यायेषु तर्कशास्त्रेषु नैतद्राज्ये इति परिसंख्या । (पक्षे) छल कपटः निग्रह निगडबन्धनादि. । अस्ति परलोक इति मतिर्यस्य स आस्तिकः स न भवतीति नास्तिक. तस्य भावः नास्तिकता परलोकाभावज्ञानवत्त्व, चार्वाकेषु लोकायतिकेषु. (पक्षे) नास्तिकता दारिद्र्य । कण्टका रोमाञ्चाः तेषां योग सम्बन्ध., योगेषु योगाभ्यासेषु (पक्षे) कण्टका क्षुद्रशत्रवः । परीवाद. वीणोपकरणवस्तु वीणासु परिवादिनीषु, (पक्षे) परीवादः अपवादः । खल धान्यमर्दनभूमिः, तत्सप्रयोगः तत्सम्बन्ध., शालिषु धान्यविशेषेषु. (पक्षे खलाः दुर्जनाः । द्विजिह्वाना सर्पाणा सगृहीतिः संग्रहण, आहितुण्डिकेषु अहितुण्डेन दीव्यन्तीति आहितुण्डिका व्यालग्राहिणः तेषु [पक्षे) द्विजिह्वाः उपजापशीला खला । करः हस्त तेन च्छेद कुड्मलाना मुकुलानां ग्रहणेषु, (पक्षे) करच्छेदःराजग्राह्यबलिच्छेद । नेत्राणा लोचनानां उत्पाटन उद्धरणरूप दण्डनं, मुनीनां नतु प्रजानामिति विरोधाभाससङ्कीर्णा परिसंख्या । (पक्षे) मुनीना दर्भाणा नेत्रोत्पाटन मूलोत्पाटन । राजा चन्द्र तद्विरुद्धता, पङ्कजानां तामरसाना [पक्षे] राजा भूपतिः तद्विरुद्धता । सार्वभौमेन तन्नाम्ना दिग्गजेन योग सम्बन्धः दिग्गजाना दिशादन्तिना सार्वभौमस्य दिग्गजेष्वन्यतमत्वात् । (पक्षे) सर्वासु भूमिषु विदित सार्वभौम. चक्रवर्ती तेन योगः सम्बन्ध. । अत्र चिन्तामणि विना न कश्चित् सार्वभौम इति भावः । अग्निना वह्निना तुल्या धटया

महावराहो गोत्रोद्धरणप्रवृत्तोऽपि गोत्रोद्दळनमकरोत् । राघवः परिहरन्नपि जनकभुवं जनकभुवा सह वनं विवेश । भरतो रामे दर्शितभक्तिरपि राज्ये विराममकरोत् । नलस्य दमयन्त्या मिलितस्यापि पुनर्भूपरिग्रहो जातः । पृथुरपि गोत्रसमुत्सारणाविस्तारितभूमण्डलः । इत्थं नास्ति वागवसरः पूर्वतरेषु राजसु । अपि तु वचनीयतायाः ।

---

च शुद्धिः वर्णान्मानयोः ज्ञानं, सुवर्णानां हेम्नां (पक्षे) अग्निना वह्निना तुल्या जलदिव्यादिपरीक्षया च शुद्धिः पापशोधनं न प्रजानां सम्भवति । तादृगशुद्धियोग्यानामभावादिति भावः । सूच्या लौहं छिद्रसाधनं वस्तु तया भेदः छिद्रोत्पादनं खण्डनं वा, मणीनां वज्रादिरत्नानां, (पक्षे) सूची करादभिनयः सूचको वा तस्य भेदः अन्यथाभावः । शूलेन उदरबाधया भङ्गः आमर्दनं, युवतीनां तरुणीनां नवप्रसवेषु नूतनप्रसूतिषु (पक्षे) शूलेन आयुधविशेषेण भङ्गः प्राणिनां वधच्छेदादिः । दुश्शासनस्य दुर्योधनानुजस्य दर्शनं निरीक्षणं, महाभारते (पक्षे) दुष्टस्य शासनस्य दुष्टशत्रोर्वा निरीक्षणं । करैः सूर्यकिरणैः पत्त्राणां दळानां दारणं विकासनं, जलजानां तामरसानां यद्वा करपत्त्रैः क्रकचैः दारणं जलजानां शङ्खानां । (पक्षे) करपत्त्रैः क्रकचैः दारणं भेदनं तादृक्कृन्तनापराधिनामभावादिति भावः ॥

अथ विरोधाभासेनाह । **महावराह इति** ॥ महावराहः यज्ञवराहरूपेणावतीर्णो भगवान् विष्णुः । गोत्रायाः भूमेः उद्धरणाय प्रवृत्तः गोत्रोद्दळनमकरोदिति शाब्दो विरोधः । परिहारस्तु, गोत्रयाः भूमेः उद्दलनं खुरपुटैः कुट्टनं इति । राघवः काकुत्स्थो रामः, जनकभुवं जानकीं परिहरन्नपि, जनकभुवा जानक्या सह, वनं दण्डकारण्यं, विवेश प्रविष्टवानिति विरोधः । जनकस्य स्वपितुः दशरथस्य भूः निवासदेशः अयो-

स पुनरन्यो देवो न्यक्कृतसर्वोर्वीपतिचक्रचरितः । तथा हि । स पर्वतः कटकसञ्चारिणो गन्धर्वान दर्शितशृङ्गोन्नतिः सुखयन्न विरराम । स हिमालयो नावश्यायोञ्ज्वलितो नो मायाजन्मने हितश्च । स हिमानीगिरिस्थितो वृषध्वजश्च । स सदागतिरवधूताखिलकान्तारः पावकाग्रमरो न भोगो-

द्धचेति यावत् ता परिहरन् इति परिहारः । भरत कैकेयीपुत्रः, रामे ज्येष्ठभ्रातरि रघुनाथे, दर्शितभक्तिरपि प्रकाशितादरातिशयोऽपि, राज्ये राष्ट्र एव, विराम रमाभाव, अकरोत् अतनोत् । इति विरोधः । परिहारस्तु विराम विरक्ति । नलस्य नैषधस्य, दमयन्त्या भैम्या, मिलितस्यापि सङ्गतस्यापि, पुनर्भूः द्विरूढा कन्या तस्याः परिग्रहः स्वीकारः, जातः उत्पन्नः । परिहारस्तु, पुन भूयोऽपि भूपरिग्रहः पृथ्वीपरिग्रहः । पृथुरपि वैन्योऽपि, गोत्राणा स्वगोत्रजाना समुत्सारणेन निष्कामनेन विस्तारित विशालतामापादित भूमण्डल येनेति विरोधः । अतिधार्मिकत्वेन प्रसिद्धस्य पृथुचक्रवर्तिनः स्वगोत्रजबन्धुजनसमुत्सारणमित्यैतदतिविरुद्धम् । परिहारस्तु । गोत्राणां पर्वतानां समुत्सारणेन दूरतः प्रक्षेपणेन विस्तारित वैशाल्यमासादित भूमण्डल येनेति। पृथुचक्रवर्ती निजचापाग्रेणैकत्रमर्द्धीभूतान् पर्वतानुत्सार्य निम्नोन्नतदेशान् समीकृत्य प्रजावासयोग्यां सस्यादिसमृद्धिसम्पन्ना च भूमि चकारेति पौराणी कथाऽत्रानुसन्धेया। इत्थ एवरीत्या, पूर्वतनेषु राजसु प्राक्तनमहीपालेषु, वागवसरः वचनावकाशः, नास्ति । अपि तु, वचनीयतायाः निन्दायाः अवकाशः ॥

**स पुनरिति** ॥ न्यक्कृत तिरस्कृत सर्वेषां समग्राणा उर्वीपतीना राज्ञां चरित येन तादृश , सः देवः अन्य एव विलक्षण एवेति भेदकातिशयोक्तिः । पुनः श्लेषेणाह। स इत्यादिना। स राजा, पर्वतः अद्रिः दर्शिता प्रकाशिता शृङ्गाणा शिखराणां उन्नतिः औन्नत्य येन सः तादृशः, कटकेषु

न्मुकः सुमनोहरश्च । स रत्नाकरोऽनतिमयोऽगाधः समर्यादो नोद्रेको विस्मयः सदा हिमकराशयोऽमृतमयः सत्पावस्तस्याचलो न क्रोधो महानदीनः समुद्रश्च । स क्षणदानन्दकरः कुमुदवनैकबन्धुः सकलकलाकुलगृहं न तारातिबलश्चन्द्रश्च । स सिवोदयहेतुः काञ्चन शोभां बिभ्रदचलाधिकलक्ष्मीः सुमेरुः ।

---

नितम्बेषु "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः । सञ्चारिणः सञ्चरणशीलान, गन्धर्वान, हाहाहूहूप्रभृतीन् देवयोनिविशेषान् । सुखयन् सौख्ययुक्तान कुर्वन, न विरराम न विरतिमासादितवान् । सर्वदा असुखयदित्यर्थः । पक्षे । सः पर्वत उन्नतवान् "तत्पर्वमरुद्भ्याम्" इति वार्तिकेन मत्वर्थीयस्तप । कटकं सैन्य तत्र सञ्चारिणः, गन्धर्वान् अश्वान् 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः । सुखयन् राज्याङ्गभूतबलप्रधानत्वेन पोषयन । दर्शिते शृङ्ग प्राधान्य उन्नतिः उत्कर्षश्च येन तादृशः इति च । सव्यतिरेकं समाह स इत्यादिना । सः, हिमालयः तदाख्यः पर्वतराज तादृशोऽपि न अवश्यायस्य नीहारस्य उच्चलित उपरितनदेशसञ्चरण यस्येति विरोध । उमाया पार्वत्या जन्मने उत्पत्तये नो हितश्च । पक्षे । स मायाः लक्ष्म्या आलय आवासभूतो हि । हि. प्रसिद्धौ । अवश्यायेन गर्वेण नोच्चलित नान्यथाभाव गत । मायायाः कपटस्य जन्मने नो हितश्च । शुद्धश्लेषमाह । स इत्यादिना । स हिमानी हिमसहतिः तदाक्रान्तो गिरिः हिमानीगिरिः हिमवत्पर्वतः तत्र स्थित, वृषध्वज शिवः । पक्षे । स, मानी चित्तसमुन्नतियुक्त । गिरि सूनृतवाचि, स्थित प्रतिष्ठित । वृष सुकृत तदेव ध्वज प्रधान यस्य । असौ सदागतिः वात "'मातरिश्वा सदागति'" । इत्यमरः । अवधूतानि कम्पितानि अखिलानि सैसग्राणि कान्तागाणि महावनानि येन सः तादृशः । पावकस्य अग्नेः अग्ने-

सरः पुरोयायी, नभोगेषु मेघेषु उत्सुकः, सुमनसां पुष्पाणां हरः अपहर्ता । (पक्षे) सता साधूनां आगतिः आगमन यस्य तादृशः, अवधूता दूरीकृता कान्ताराः दुर्गमार्गा दुर्भिक्षा वा येन सः, पावकाना पवित्रवस्तूनां अग्रेसरः प्राथमिक., तथा च मनुः । 'अग्निचित्कपिला सती राजा भिक्षुर्महोदधिः । दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत नित्यशः ॥' इति । पावकानां सदाचाराणां अग्रेसर इति वा । भोगेषु विषयसुखेषु, स्रक्चन्दनादिषु नोत्सुकः यद्वा नभोगेषु देवेषु उत्सुकः । सुमनस. पण्डितान् हरति दानमानादिना वशीकरोतीति सुमनोहरः । सः, रत्नाकर. रत्नाना उत्तमवस्तूनां आकरः खनि तदुत्पत्तिस्थान, आस्पद वा । 'जातौ जातौ यदुत्कृष्ट तद्रत्नमिति कथ्यते' इति वचनात् । सर्वोत्तमहस्त्यश्वरथशिबिकाभूषणादीनां प्रमदारत्नानाञ्चास्पदीभूत इत्यर्थः । (पक्षे) मुक्ताप्रवाळमाणिक्यादिमणीनां आकर., नतिः नमस्कारः नतिमयो न भवतीति अनतिमयः यं कश्चिदपि न नमतीत्यर्थ. । (पक्षे) न विद्यन्ते तिमया. मत्स्यविशेषाः यत्रेति अतिमय. स न भवतीति अनतिमय. तिमययुक्त एवेत्यर्थः । अनेनैव प्रयोगेणोह्यते तिमिशब्दपर्यायस्तिमयशब्दोऽप्यस्तीति । अगाध गम्भीर, उभयत्र समानमेतत । मर्यादा शास्त्रमर्यादा तत्सहितः समर्याद. (पक्षे) कूलदेशवान् । उद्रेक उद्वृतो दोषः सः न विद्यते अस्येति नोद्रेक (पक्षे) रेको जलजन्तुविशेषः, उत्कृष्टरेको न भवतीति नोद्रेकः सरेक इत्यर्थ । स्मय. गर्वः विगतस्मयः विस्मयः (पक्षे) आश्चर्यभूतः । सदा. दानसहितः हिमकराशयः चन्द्रवदतिशीतलहृदयः (पक्षे) सदा अहीनां सर्पाणां मकराणा मत्स्यानाञ्च आशयः स्थानं, अमृत हृद्य वच तत्प्रचुरः अमृतमयः (पक्षे) जलमयः । सत् विद्यमानं पात्र योग्यपुरुष. यस्य (पक्षे) सत् शोभन पात्र कूलद्वयमध्यं यस्य । 'पात्रन्तु भाजने योग्ये वित्ते कूलद्वयान्तरे ।' इति कोश. । सत्पोत इत्यपि क्वचित्पाठः । अर्थस्तु प्रकृते सत्पुत्रः (पक्षे) सन् सुन्दरः पोतः यानपात्रं यस्य स । तस्य अचलो न क्रोधः कोपः अचलो

यस्य च रिपुवर्गः सदा पार्थोऽपि न महाभारतरण-योग्यः, भीष्मोऽप्यशान्तनवे हितः, सानुचरोऽपि न गोत्र-

न भवति । चल एव । न स्थायीत्यर्थः । (पक्षे) तस्य सागरस्य अधः अचल. पर्वतः नक्रः कुम्भीर उभावपि स्तः । सः महान् अदीनः अकृपणः (पक्षे) महानदीना गङ्गाप्रभृतीनां इनः प्रभुः । मुद्रया राजचिह्नेन सहितः समुद्र (पक्षे) अर्णव. । सः राजा, चन्द्र इव इन्दुरिव, क्षण· उत्सव· 'क्षण उद्धर्षो मह उद्धव उत्सवः ।' इत्यमरः । त ददाति दिशन्तीति क्षणदा. हिताचरणेन स्वहृदयानन्दकरा इति यावत् । तेषां आनन्दकर. सुखोत्पादकः । को. पृथिव्याः मुदा प्रीत्या यदवन रक्षण तेन बन्धुरिव बन्धु, सकलकलानां गीत-वादित्रादिचतुष्षष्ठिकलाना कुलगृह वासभवन, यद्वा कलानां कुल समूह. तस्य गृह विहारसदन । नत पराजितत्वात् पादपतित अरातीनां शत्रूणा बल सैन्यं, यस्मिन्, यद्वा, नत अधःकृतं अरातीनां बल पराक्रमः येन । (पक्षे) क्षणदा रात्रिः तस्या आनन्दकरः, कुमुदवनानि कैरवकाननानि तेषा बन्धुः । सकलाना कलानां षोडशकलाना कुलस्य गृह निवासदेश· । न, ताराणि नक्षत्राणि अतिबलानि यस्मात् एतदपेक्षया अल्पतेजस्कत्वादिति भाव· । यद्वा ताराभिर्नातिक्रान्तबलः । सुमेरु. हेमाद्रि स इव, मित्रोदये सुहृदभ्युदये हेतुः, काचन अन्यादृशी शोभा प्रभा बिभ्रत् वहन, अचला स्थिरा अधिका अमिता लक्ष्मीः सम्पत् यस्य सः । (पक्षे) मित्रस्य सूर्यस्य उदये हेतु. । महामेरुशिखरप्रतिष्ठितशिशुमाराख्यज्योतिश्चक्रारूढानि सूर्यादिज्योतींषि तत्पर्वत प्रदक्षिणीकुर्वाणान्युदयास्तमये लभन्त इति विष्णुपुराणे । काञ्चनशोभा सौवर्णकान्ति तत्पर्वतस्य काञ्चनमयत्वात् । बिभ्रन, अचलेभ्यः पर्वतान्तरेभ्यः अधिका लक्ष्मी· शोभा यस्य स· ।

**यस्य चेत्यादि** । यस्य राज्ञ, (सम्बन्धी) रिपुवर्गः शत्रुसमूह., सदा, पार्थोऽपि अर्जुनोऽपि, न महाभारतरणस्य कौरवयुद्धनिर्वहणस्य

भूषितः। स त्रिशङ्कुरपि न नाक्षत्रपथच्युतः, शङ्करोऽपि न विषादी, पावकोऽपि न कृष्णवर्त्मा, नाश्रयाशो, न दहनश्च। नान्तक

---

योग्यो भवतीति विरोध.। अपार्थ नष्टधन गळितविभवो वा, महाभारस्य कार्यभारस्य तरणयोग्यो न भवतीति परिहार। भीष्म. देवव्रतः सोऽपि, शन्तनु. भीष्मपिता तस्येद शान्तनवं "तस्येदम्" इत्यण्। तादृश ईहितं चेष्टित प्रेमा वा तद्यस्य न भवति स तथेति विरोध.। परिहारस्तु, भीष्मः भयङ्कर', अशान्ताः शान्तिरहिताः तेषां यो नव' स्तुति. तस्मिन् हित.। सानौ प्रस्थदेशे चरति सञ्चरतीति सानुचर. तादृशोऽपि, गोत्रभुवि पर्वतभूम्या नोषितः इति विरोध.। सानुचरः सेवकसहित', गोत्र कुल तेन न भूषित' इति परिहारः।

**स त्रिशंकुरपीति** ॥ शङ्कु' शक्तिः "शङ्कुःशक्तित्रये स्थाणौ" इति कोश। त्रयः शङ्कव. प्रभ्वादय. शक्तय यस्य स तथा। यद्वा त्रिषु लोकेषु श सुखं कुः पृथिवी कालत्रयेऽपि सुखिता पृथिवी यस्य स तथा। पक्षे त्रिशङ्कुर्नाम इक्ष्वाकुकुलजः कश्चिद्राजा। **न नाक्षत्रपथच्युत इति** ॥ क्षत्रस्य पन्था. क्षत्रपथः तस्माच्च्युत. भ्रष्ट क्षत्रपथच्युतः स नभवतीति अक्षत्रपथच्युतः क्षत्रपथवर्ती, स न भवति नाक्षत्रपथच्युत', स न भवति ननाक्षत्रपथच्युतः। क्षत्रपथास्थित इत्यर्थः। पक्षे नाक्षत्रपथ. आकाश तस्मान्नच्युत इति विरोधः। **शंकरोपीत्यादि** ॥ शं मङ्गळं करोतीति शङ्कर. पक्षे शङ्करः रुद्रः, न विषादी न विषादयुक्तो भवति। पक्षे, विषं गरळ अत्ति भक्षयतीति विषादी स न भवतीति विरोध.। पावक. पवित्र', पक्षे, पावक. अग्निः, कृष्णा.

इवाकस्मादपहृतजीवनः, न राहुरिव मित्रमण्डलग्रहणसंवर्धितरुचिः, न नळ इव कलिविजितविग्रहः, न चक्रीव सृगालवधस्तुतिसमुल्लसितः। नन्दगोप इव यशोदयान्वितः, जरासन्ध इव घटितसन्धिविग्रहः, भार्गव इव सदानभोगः, दश-

---

मलिना. नैषा वर्त्म मार्गं तद्यस्य न भवति स तथा। पक्षे, कृष्णवर्त्मा नीलमार्गगामी न भवतीति विरोधः। नाश्रयाशः आश्रयभक्षको न भवति, न दहनश्च न परोपतापकारी, पक्षे, आश्रयान् तृणकाष्ठादीन् नाश्नुते न व्याप्नोति, न दहनश्च न भस्मीकरणशक्तियुक्तश्चेति विरोधः। अन्तकः मृत्युः स इव, अकस्मात् अकाण्डे, अपहृतं जीवनं वर्तनं 'वृत्तिर्वर्त्तनजीवने' इत्यमरः। पक्षे, प्राणाः। राहुः सैंहिकेयः स इव, मित्राणां सुहृदां मण्डलं निवासदेशः तस्य ग्रहणे आस्कन्दने संवर्धिता रुचिः वाञ्छा यस्य न भवति स तथा, पक्षे, मित्रमण्डलं सूर्यबिम्बं तस्य ग्रहणेन सवर्धिता नाशिता रुचिः शोभा यस्य स तथा। नळः नैषधः स इव, कलिना युद्धेन 'सम्प्रहाराभिसम्पातकलिसंस्फोटसंयुगाः' इति कोशः। विजितः निर्धूतः विग्रहः विरोधः यस्य स तथा। शत्रूणामभावात्। पक्षे कलिना कलियुगेन विजितः विग्रहः शरीरं यस्य स तथा। चक्री विष्णुः स इव, सृगालानां क्षुद्राणां दुष्टानां वा वधः हननं तन्निबन्धनया स्तुत्या स्तोत्रेण न समुल्लसितः। पक्षे सृगालः तन्नामा दैत्यः। नन्दगोपः श्रीकृष्णेन भगवता पितृत्वेन भावितः व्रजाध्यक्षः, स इव, यशः कीर्तिः दया कृपा ताभ्यां अन्वितः, पक्षे, यशोदया तन्नाम्न्या पत्न्या अन्वितः। जरासन्धः मगधदेशाधिपः स इव, घटितौ आनुकूल्येन योजितौ सन्धिविग्रहौ गुणौ येन सः। पक्षे, घटितः सन्धिः सन्धानं यस्य तादृशः विग्रहः शरीरं यस्य सः। भार्गवः शुक्रः 'उशना भार्गवः कविः' इत्यमरः। स इव'

रथ इव सुमित्रोपेतः सुमन्त्राधिष्ठितश्च, दिलीप इव सुदक्षिणान्वितः रक्षितगुश्च, राम इव जनितकुशलवयोरूपोच्छ्रायः ॥

तस्य च राज्ञः पारिजात इवाश्रितनन्दनः, हिमालय इव

---

दानभोगाभ्या सहितः सदानभोगः "वोपसर्जनस्य" इत्यनेन सहशब्दस्य पाक्षिकस्सादेशः । पक्षे, सदा अनारत, नभोग. आकाशगामी, दशरथ अजमहाराजतनयः, स इव सुमित्रैः शोभनैस्सुहृद्भिः उपेतः, पक्षे, सुमित्रया देव्या उपेत. । सुमन्त्रः शोभनो मन्त्रः तेनाधिष्ठितः । पक्षे, सुमन्त्रेण तन्नाम्ना सारथिना अधिष्ठितश्च । दिलीप· अजमहाराजपिता, स इव, सुदक्षिणा. शोभनाः पण्डिता. तैरन्वित·, रक्षिता गौ भूमि येन स. । पक्षे, सुदक्षिणया देव्या अन्वित., रक्षिता गौः वसिष्ठनन्दिनी येन सः । राम दाशरथि· स इव, जनितः कुशलेन शोभनेन वयसा रूपस्य उच्छ्राय महत्त्वं यस्य स तथा, यद्वा कुशल वयः रूपञ्च तयोरुच्छ्रायः यस्य स तथा । पक्षे, जनितौ कुशलवौ पुत्रौ ताभ्यां य यातः जनितकुशलवयः 'या' प्रापणे "आतोऽनुपसर्गे कः" इति कः । उरुर्महान्, उपोच्छ्राय. उच्छ्राय यस्य स तथा ।

**तस्यचेति** । तस्य च राज्ञ. कन्दर्पकेतुर्नाम तनयोऽभूदिति योजना । स कीदृश इत्यत आह । पारिजात इवेत्यादिना । पारिजातः तन्नामा देवतरुविशेष स इव, आश्रिताना नन्दन. प्रीतिकर , पक्षे, आश्रित नन्दन इन्द्रोद्यान येन स । हिमालयः हिमवान् स इव, जनित उत्पादित शिवं कल्याण

जनितशिवः, मन्दर इव भोगिभोगाङ्कितः, कैलास इव महेश्वरोपभुक्तकोटिः, मधुरिव नानारामानन्दकरः, क्षीरोदमथनोद्यतमन्दर इव मुखरितभुवनः, रागराज इवोल्लसितरतिः, ईशानभूतिसञ्चय इव सन्ध्योच्चलितः, शरन्मेघ इवावदातहृदयः विष्णुपदावलम्बी च, पार्थ इव समरसाहसोचितः, कंस-

यस्य स, येनेति वा । पक्षे, जनिता शिवा भवानी येन । मन्दरः मन्थानाचलः स इव, भोगिभोगैः राजभोगैः अङ्कितः । पक्षे, भोगी सर्पः तस्य भोगेन शरीरेण अङ्कितः । कैलासः राजताद्रिः स इव, महद्भिः ईश्वरैः स्वामिभिः उपभुक्ता अनुभूता कोटिः उत्कर्षः यस्य, पक्षे, महेश्वरेण रुद्रेण उपभुक्ता अनुभूता कोटिः शृङ्गदेशः यस्य । मधुः वसन्त इव, नानारामा बहुविधस्त्रियः तासामानन्दकरः, पक्षे, नाना आरामाणि उपवनानि तेषां वा आनन्दकरः । क्षीरोदस्य दुग्धाब्धेः मथने लोडने उद्यतः सन्नद्धः यः मन्दरः स इव, मुखरितं जयघोषेण वाचालितं भुवनं यस्य । पक्षे, मुखरितं भुवनं जलं (तत्स्थानीयं क्षीरमिति यावत्) येन । रागराजः कामः, स इव, उल्लसिता उज्ज्वला रतिः क्रीडा आश्रितविषयकः प्रेमा वा यस्य सः । पक्षे, उल्लसिता, रतिः तदाख्या पत्नी यस्य । ईशानस्य रुद्रस्य, भूतिसञ्चय इव भस्मस्तोम इव, सन्धिः षड्गुणानां प्रथमः तत्र आ समन्तात् उच्चलितः उद्युक्तः । पक्षे, सन्ध्यायां सायंसन्ध्यायां उच्चलितः । (तस्या नटनसमयत्वादिति भावः) शरन्मेघ इव शारत्कालिकजीमूत इव, अवदातं निर्मलं हृदयं यस्य सः । पक्षे, अवदातं जलाभावात् निर्मलं हृदयं मध्यदेशः यस्य सः । विष्णुपदावलम्बी च विष्णुभक्त इत्यर्थः । पक्षे, विष्णुपदं आकाशं तदवलम्बी । पार्थः अर्जुनः स इव, समरसाः समगुणाः तैः

इव कुवलयापीडभूषणः, तार्क्ष्य इव सुमुखनन्दनः, विष्णुरिव क्रोडीकृतसुतनुः, शान्तनव इव स्ववशकालधर्मः, कौरवव्यूह इव सुशर्माधिष्ठितः, जलधरसमय इव विमलत-

---

ईषद्धसः आहसः क्रीडावा "आहसो विजय क्रीडा" इति कोश । पक्षे समरं युद्ध तत्र यत्साहस अनिरूप्यैव सद्य क्रिया, तत्र उचित योग्य । कंसः उग्रसेनसुतः मथुराधिपति स इव, कुवलय नीलोत्पल तद्रूप यः आपीडः शिरोऽलङ्कारः स एव भूषण यस्य । पक्षे, कुवलयापीड इति कंसगजस्य नाम, सः भूषण यस्य स. । तार्क्ष्य. गरुड. स इव, सुमुखान पण्डितान् नन्दयति दानमानादिना आह्लादयतीति सुमुखनन्दन., पक्षे सुमुख सुमुखाख्य नन्दन पुत्र. यस्य स. । विष्णु. श्रिय.पति. स इव, क्रोडीकृता वशीकृता आलिङ्गिता वा सुतनुः शोभनाङ्गी महिषी येन सः । पक्षे क्रोडीकृता वराहीकृता सुतनु शोभन शरीर येन स. । शान्तनव. भीष्मः स इव, स्ववश स्वाधीनः कालधर्मः कालगुणः येन स । "राजा कालस्य कारणम्" इति वचनात् । पक्षे स्ववश. स्वायत्त कालधर्म पञ्चता यस्य स. । 'स्यात्पञ्चता कालधर्मो दिष्टान्त प्रलयोऽत्यय.' इति कोश. । कौरवा. दुर्योधनादय तेषां व्यूहः सेनाविन्यास. स इव. शोभन शर्म सुख 'शर्मसातसुखानि च' इत्यमरः । पक्षे सुशर्मा त्रिगर्तदेशीयो राजा तेन अधिष्ठित. । जलधरसमयः वर्षाकाल स इव, विमलया निर्मलया तीक्ष्णयेति यावत् । तरवारिधारया खड्गाग्रेण त्रासितानि भीतिमापादितानि राजहंसानां राजश्रेष्ठाना मण्डलानि समूहा. येन सः । पक्षे, विमलतराभि. वारिधाराभिः जलधाराभि. त्रासित भीति आपादित राजहसानां मराळानां मण्डल येन स । वर्षासमये हंसाः क-

म्वारिधारात्रासितराजहंसमण्डलः, सुबाहुरपि रामानन्दकरः, समदृष्टिरपि महेश्वरः, मुक्तामयोऽप्यतरळमध्यः, वंशदीपोऽप्यक्षतदशः, तनयोऽभूत्कन्दर्पकेतुर्नाम ॥

येन चन्द्रेणेव सकलकलाकुलगृहेण शर्वरीतिहारिणा कैरवविबन्धुना प्रसाधिताशेन विलोकिता जलधय इव समुल्ल-

---

न्दुःखजलास्वादनसन्त्रस्तास्सन्तो मानससमाश्रयन्तीति प्रसिद्धिः । सुबाहुः विश्वामित्रयज्ञविघाती रामशत्रुः कश्चन राक्षसः सोऽपि, रामस्य राघवस्य आनन्दकरः सुखोत्पादक इति विरोधाभासः । प्रकृतार्थस्तु, शोभनौ बाहू करौ यस्य स, तादृशः । रामाणां सुन्दरीणां आनन्दकरः । समदृष्टिः युग्मदृष्टिरपि महेश्वर इति विरोधाभासः । महेश्वरेण विषमदृष्टिना किल भाव्य । प्रकृतार्थस्तु, समदृष्टिः शत्रुमित्रोदासीनेषु सर्वत्र समः न प्राकृतवदेकत्र पक्षपातीति भाव. । महांश्चासावीश्वरश्च महेश्वर. । मुक्तामयोऽपि मौक्तिकहारोऽपि, तरळ हारमध्यगो रत्नविशेषः तद्रहित इति विरोधः । मुक्ताहारस्य तरळशून्यत्व विरुद्धम् । प्रकृते । मुक्तामय नीरोगः, अतरळ अचञ्चल मध्य हृदय यस्य स । वंशः वेणुः स्थूणोपरिस्थितदारु वा, तत्स्थो दीपः वंशदीप. सोऽपि, अक्षता अहता दशा वर्तिः यस्य स. तादृश इति विरोधः । प्रकृते, वंशदीपः कुलप्रकाशकः, अक्षता क्षतिरहिता दशा अवस्था यस्य सः ।

**येन चन्द्रेणेवेत्यादि** ॥ चन्द्रेणेव सुधांशुनेव स्थितेन येन, विलोकिता. निरीक्षिताः, सन्तः साधवः जलधय इव, परा ऋद्धि, आपुः इति योजना । तमेवाह । सकलेत्यादिना । सकलानां समग्राणां कलानां

सितगोत्रास्सुदूरपरिवर्धितजीवनाः प्रसन्नसत्वास्सन्तः परामृद्धिमवापुः ।

यस्य जनितानिरुद्धलीलस्य रतिप्रियस्य कुसुमशरासनस्य मकरकेतोरिव दर्शनेन वनिताजनस्य हृदयमुल्ललास ।

---

विद्याना कुलगृहेण निवासभवनेन । पक्षे, सकलानां कलाना तेजोमयभागानां यत् कुल समूहः तस्य गृहेण निवासस्थानेन । शर्वः परमेश्वर तस्य रीतिः चेष्टा स्वभावो वा तद्धारिणा तत् स्वीकुर्वता, पक्षे, शर्वरी रात्रिः तस्यां विद्यमाना या ईतिः उपद्रवः अन्धकारव्याप्तिलक्षणः ता हरति नाशयतीति तादृशेन । कैरवाः पिशुनाः तेषा विबन्धुना शत्रुणा (पक्षे) कैरवाणां कुमुदानां विशेषेण बन्धुना, प्रसाधिता प्रकर्षेण साधिताः आशा अर्थिनां वाञ्छाः येन सः तेन । पक्षे । प्रसाधिताः अलङ्कृताः आशाः दिश येन तेन । समुल्लसित सम्यक्प्रकाशित गोत्र कुल येषा ते तादृशाः । पक्षे, समुल्लसिता गोत्रा भूमिः गोत्रा पर्वता वा येस्ते तादृशा, सुदूरं अत्यर्थं वर्धितं अभिवृद्धि प्रापित जीवन वृत्तिः येषा ते। पक्षे, सुदूरवर्धितजलाः । प्रसन्न प्रसादयुक्त सत्व चित्त येषा ते । पक्षे. प्रसन्नानि अभिव्यक्तानि हृष्टानि वा सत्वानि जलजन्तवः येषु ते ।

**यस्येति** ॥ मकरकेतोरिव मन्मथस्येव यस्य, दर्शनेन अवलोकनेन, वनिताजनस्य प्रमदाजनस्य, हृदय मनः, उल्ललास विचकास । यस्य किंभूतस्येत्यत आह । जनितेत्यादिना । जनिताः उत्पादिताः अनिरुद्धाः अप्रतिषिद्धाः लीलाः विलासा यस्य तादृशस्य । पक्षे, जनितः यः अनिरुद्धः तस्य लीला शोभा यस्य स तथा । रतिः क्रीडा प्रिया इष्टा यस्य तस्य (पक्षे) रतिप्रियस्य रतिदेवीवल्लभस्य । कुसुमशरस्य मन्मथस्येव असन कान्तिः यस्य तस्य (पक्षे) कुसुममेव शरासनं धनु यस्य तस्य ॥

यस्मै चानुगतदक्षिणसदागतये नेत्रश्रुतिसुखप्रदाय कोमलकोकिलरुताय विकसितपल्लवाय कृतकान्तारतरङ्गाय सुरभिसुमनोभिरामाय सर्वसुलभपद्माय विस्तृतकनकसम्पदे अतिक्रान्तदमनकाय वसन्तायेवोपवनलता इवोत्कलिका

---

यस्मै चेत्यादि ॥ वसन्ताय मधुमासाय, उपवनलता इव, प्रमदवनवीरुध इव, यस्मै तरुण्यः युवतयः, स्पृहयांचक्रुः अभिलेषुः। किम्भूतायेत्यत आह । अनुगतेत्यादिना । अनुगताः भक्ताः दक्षिणाः सरलाः सन्तः पण्डिताः तेषांआगतिः आगमनं यस्य तस्मै । पक्षे अनुगतः प्राप्तः दक्षिणसदागतिः मलयवातः यः स तस्मै । नेत्रयोः, श्रुत्योः श्रोत्रयोः, सुखप्रदाय सौख्यकराय। पक्षे । नेत्रश्रुतिः सर्पः तस्य सुखप्रदाय, तस्य सौरभप्रियत्वात् वाताशनत्वाद्वा। कोमलं मनोज्ञं कोकिलस्य परभृतस्य रुतं शब्द इव शब्दः यस्य तस्मै । पक्षे, कोमलानि कोकिलरुतानि यस्मिन् तस्मै । विकसिताः हृष्टाः पल्लवाः विटाः यत्र तस्मै। पक्षे, विकसिताः पल्लवाः किसलयानि यस्मिन् तस्मै। कान्तायाः रतं कान्तारतं तस्मिन् रङ्गः सक्तिः कृतः कान्तारतरङ्गः येन सः तस्मै । पक्षे, कान्तारं वनं तस्य तरङ्गः उच्चावचभावः स कृतो येन तस्मै । सुरभिः श्रेष्ठः । 'श्रेष्ठे तु निगद्यते सुरभिः' इति कोशः । सुमनाः पण्डितः अभिरामः सुन्दरश्च तस्मै । (पक्षे) सुरभयः गन्धयुक्ताः सुमनसः पुष्पाणि ताभिः अभिरामाय । सर्वेषां सुलभा सुखेन लब्धुं शक्या पद्मा श्रीः यस्य तस्मै । पक्षे, सर्वसुलभानि पद्मानि तामरसानि यस्मिन् । विस्तृता विस्तारमासादिता (अमितेति यावत्) तादृशी कनकसम्पत् स्वर्णसमृद्धिः यस्य तस्मै । पक्षे, विस्तृता कनकसम्पत् धुस्तूरसमृद्धिः येन तस्मै । 'उन्मत्तः कितवो धूर्तो धुत्तूरः काञ्चनाह्वयः' इति कोशः । दमयन्तीति दमनकाः शत्रवः, अतिक्रान्ताः अभि-

सहस्रसंकुला भ्रमरसङ्गताः प्रवाळहारिण्यो विलसद्वयसस्तरुण्यः स्पृहयांचक्रुः ।

यस्य च, समरभुवि, भुजदण्डेन कोदण्डं, कोदण्डेन बाणाः, बाणैररिशिरः, अरिशिरसा भूमण्डलं, भूमण्डलेनानुभूतपूर्वनायकस्मरणं, स्मरणेन च कीर्तिः, कीर्त्या च सप्त सागराः, सागरैः कृतयुगादिराजस्मरणं, स्मरणेन स्थैर्यं, स्थैर्येण प्रतिक्षणमाश्चर्यमासादितम् ।

---

भूताः दमनका शत्रवो येन । पक्षे । अतिक्रान्ताः अतिशयिनाः दमनकाः तदाख्याः सुरभिललताविशेषा यस्मिन् तस्मै । उत्कलिकाना उत्कण्ठानां "उत्कण्ठोत्कलिके समे" इत्यमर । सहस्रेण सङ्कुलाः व्याप्ता । पक्षे, उद्गता कलिका कोरका तासा सहस्रेण सङ्कुलाः । भ्रमरा कामुका नैस्सङ्गताः, यद्वा भ्रमेषु विभ्रमेषु रस रुचि गता प्राप्ता । पक्षे, भ्रमरा अळयः । प्रकृष्टे वाले कुन्तलै हारिण्यः मनोहराः । 'चिकुरः कुन्तलो वाल' इत्यमरः । पक्षे, प्रवालै किसलयै हारिण्य मनोहरा । विलसत् भासमान वयः तारुण्यलक्षण यासान्ता । पक्षे, विलसन्ति वयांसि पक्षिण यासु ताः तादृश्य । यस्मै स्पृहयांचक्रुः इत्यत्र "स्पृहेरीप्सित" इत्यनेन सम्प्रदानत्वम् ।

**यस्यचेत्यादि** ॥ यस्य समरभुवि युद्धभूमौ, भुजदण्डेन, यस्येत्यत्रापि सम्बध्यते । कोदण्ड शरासन, आसादितम् आश्रितम् । कोदण्डेन बाणाः शराः आसादिता. । बाणै. अरिशिरः (जात्येकवचनम्) शत्रुशिरांसि, आसादितम् । अन्यत् स्पष्टम् । आसादितमित्यत्र "नपुसकमनपुसकेनैकवच्चास्यान्यतरस्याम्" इत्यनेन नपुसकैकशेपः । **मालादीपकालंकारः** ॥

यस्य च प्रतापानलदग्धदयितानां रिपुसुन्दरीणां करतलरचितताडनभीतैरिव मुक्ताहारैः पयोधरपरिसरा मुक्ताः ।

यस्य च निशितनाराचजर्झरितमत्तमातङ्गकुम्भस्थलविगलितमुक्ताफलदन्तुरितपारिसरे तरत्पत्ररथे रक्तवारिसमुड्डीयमानद्विरदपदकच्छपे विलसदुत्पलपुण्डरीके वाहिनीशत-

---

**यस्यचेत्यादि** ॥ यस्य कन्दर्पकेतोः, प्रतापः प्रतिपक्षसन्तापनशक्तिः स एव अनलः अग्निः तेन दग्धाः भस्मीकृताः दयिता वल्लभाः यासां ता तादृशीनां, रिपुसुन्दरीणां शत्रुस्त्रीणां, करतलेन रचितं यत्ताडनं तस्मात् भीतैरिवेत्युत्प्रेक्षा । हारैः मौक्तिकसरैः, पयोधरपरिसरा स्तनसमीपदेशाः, मुक्ताः त्यक्ताः ।

**यस्यचेत्यादि** ॥ यस्य, खड्गः, समरशिरसि आयोधनाग्रभूमौ, रराज दिदीप इति सम्बन्धः । समरशिरसि कीदृश इत्यत आह, निशितेत्यादिना । निशितैः तीक्ष्णैः नाराचैः बाणैः सिंहनखैश्च जर्झरितानि विदलितानि यानि मत्तमातङ्गकुम्भस्थलानि समदगजमस्तकप्रदेशाः तेभ्यः विगलितैः च्युतैः मुक्ताफलैः मौक्तिकमणिभिः दन्तुरितः निम्नोन्नतत्वमापादितः परिसरः समीपदेशः यस्य सः तस्मिन् । तरन्तः ततइतस्सञ्चरन्तः पत्रं वाहनं अश्वादि तद्युक्ता रथाः यस्मिन्, पक्षे, तरन्तः सञ्चरन्तः पत्ररथाः पक्षिणः यस्मिन् । 'पतत्पत्ररथाण्डजाः' इत्यमरः । रक्तवारिणि वारिवन्निरर्गळं यथा तथा प्रवहति रक्ते समुड्डीयमानानि उपरि प्लवमानानि कच्छपतुल्यानि द्विरदपदानि कृत्तहस्तिचरणानि यस्मिन् । पक्षे, वारिणि समुड्डीयमाना द्विरदपदवत् पृथुलाः कच्छपा यस्मिन् । विभिः निष्कोष-

समाकुले नृत्यत्कबन्धबन्धुरे सुरनारीसमागमोत्सुकचरद्भट-हुङ्कारभाषणरवभीषणे सागर इव समरशिरसि भिन्नपदाति-करितुरगरुधिरार्द्रो जयलक्ष्मीपादालक्तकरागरञ्जित इव खड्गो रराज ॥

---

णार्थमुपर्युपविष्टैः पक्षिभिः लसन्ति प्रकाशमानानि उन् उद्गतानि अमितानि वा पलानि मांसानि पुण्डरीकाणि मृतशरीरसंबन्धिहृत्पद्मानि यस्मिन् । पक्षे, विलसन्ति उत्पलानि कुवलयानि पुण्डरीकाणि सिताम्भोजानि यस्मिन् । वाहिन्यः सेनाः तासां शतेन समाकुले । पक्षे, वाहिनीनां नदीनां शतेन । नृत्यन्ति सद्योविगलितमस्तकत्वात् स्फुरन्ति यानि कबन्धानि अपमूर्धकलेबराणि तै बन्धुरे मनोज्ञे 'बन्धूरबन्धुरौ रम्ये नम्रे हंसे च बन्धुरः' इति रभसः । पक्षे नृत्यन्ति वाताभिघातवशात् तरङ्गरूपेण क्षुभ्यन्ति कबन्धानि पाथांसि यस्मिन् । 'कबन्धमुदकं पाथ.' इत्यमरः । सुरसुन्दरीणां देवस्त्रीणां समागमे सङ्गमे उत्सुकाः साभिलाषाः (युद्धे त्यक्तप्राणाना शूराणां स्वर्गलोकवास. तन्निबन्धनो देववनिताद्युपभोग इति च स्पष्टमागमेन) अत एव चरन्तः शत्रूणामाभिमुख्येन गच्छन्तः ये भटाः तेषा हुङ्कारेण भाषणरवेण च भीषणे भयङ्करे । पक्षे, सुरनारी मत्स्यविशेष· तस्याः समागमे अभिमुखागमने उत्सुकाः चरन्तः सञ्चरन्तः ये भटाः धीवरा. तेषामित्यादि सुगमम् । कथभूत खड्ग इत्यत आह । भिन्नेत्यादिना । भिन्नाः दारिताः पदातीनां भटानां करिणां गजानां तुरगाणां अश्वानां च रुधिरेण रक्तेन आर्द्रः सिक्तः । अतएव जयलक्ष्मीः जयश्रीः तस्या. पादालक्तकरागेण चरणयावकरसेन रञ्जित इव रूषित इव ।

अथ कदाचिदवसन्नायां यामवत्यां, दधिधवळकालक्षपणक-पिण्डइव, निशायमुनाफेनस्तबक इव, मेनकानखमार्जनस्फटिक शिलाशकल इव, मधुच्छत्रच्छायामण्डलोदरे पश्चिमाचलोपधानसुखनिपण्णशिरसो राजतताटङ्कचक्र इव श्यामायाः, शेषमधुभाजि चषक इव विभावरीवध्वाः, अपरजलनिधिपयसि

---

अथ चन्द्रास्तमय वर्णयति । **अथ कदाचिदित्यादिना** ॥ कदाचित् कस्मिंश्चित्समये, यामवत्यां रात्र्यां, अवसन्नायां परिणतायां सत्यां, दध्ना धवळ अवदात काल एव क्षपणक· तस्य य पिण्ड. भोज्यान्नकबळ तस्मिन्निव, निशा रात्रि सैव यमुना कालिन्दी तस्याः फेनस्तबकः फेनपुञ्जः तस्मिन्निव, मेनका तदाख्या अप्सरा· तस्या नखाना नखराणा मार्जन शोधन (फाळफळ्योत्पादनामिति यावत् ) तदर्थं विद्यमानः स्फटिकशिलाशकलः स्फटिकोपलखण्ड. तस्मिन्निव, मधुच्छत्र मधुमक्षिकाऽऽवास· क्षौद्रपटलमिति यावत् । 'मधुकोशो मधुच्छत्रम्' इति कोशः । तस्य या छाया कान्ति. तदुपलक्षित मण्डलोदर मण्डलमध्य यस्य तस्मिन् , पश्चिमाचल. अस्तगिरिः स एव उपधान तत्र सुखेन निषण्ण निक्षिप्त शिरः मौलि· यस्यास्ता तस्याः, श्यामाया रात्रिरूपाया· प्रमदाया , राजत रजतनिर्मित यत् ताटङ्कचक्र वर्तुल कर्णभूषण तस्मिन्निव, शेष अवशिष्ट यन्मधु सुरा तद्भजतीति भाक् तस्मिन्, विभावरी रात्रिः तद्रूपाया· वध्वा. रमण्या. चषक इव पानपात्र इव । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । कुमुदिनीनायके कैरविणीप्रिये चन्द्रे, अपरजलनिधेः पश्चिमसमुद्रस्य पयसि जले, मज्जति अवतरति सति, षट्चरणेषु भ्रमरेषु,

ङ्ककान्तिकामुक इव मज्जति कुमुदिनीनायके, शिशिरहिमशी-करकर्दमितकुमुदपरागमध्यबद्धचरणेषु षट्चरणेषु, कलप्र-लापबोधिताभिसारिकासु शारिकासु, प्रबुद्धाध्ययनकर्मठेषु मठेषु, हासरागमुखरकार्पटिकोपगीयमानकाव्यकथ्यासु र-थ्यासु, सकलनिपीतनैशतिमिरसङ्घातमतनीयस्तया मोद्धु-मसमर्थेष्विव कज्जलव्याजादुद्वमत्सु, कामिनीनिधुवनलीलाद-र्शनार्थमिवोद्ग्रीविकाशतदानखिन्नेषु, विविधविलासचित्रसुर-

शिशिरैः शीतलैः हिमशीकरैः प्रालेयजलकणैः कर्दमिताना सञ्जातकर्दमाना कुमुदपरागाणा मध्ये बद्धाः सलग्नाः चरणाः अङ्घ्रयः येषा तेषु तादृशेषु सत्सु, शारिकासु कलैः अव्यक्तमधुरैः प्रलापैः आलापैः बोधिताः प्रबोध प्रापिताः अभिसारिका याभिस्ताः तादृशीषु सतीषु, मठेषु प्रबुद्धाः प्रबोध प्राप्ताः अध्ययनकर्मठाः वेदाध्ययनकर्मनिपुणाः येषु तेषु, रथ्यासु राजमार्गेषु हासः शीघ्रयान 'हासो हास्यरसे शीघ्रगमनानन्दयोरपि " इति कोश. । तत्र रागेण मुखराः सशब्दाः ये कार्पटिकाः नित्ययात्राशीलाः तैः उपगीयमानाः वर्ण्यमानाः काव्यस्य उशनसः कथ्याः उदयकथाः यासु तासु । प्रदी-पेषु, कज्जल मषी तद्याजात्, सकल समग्र यथा तथा निपीतं भक्षित नैश निशि भव तिमिरसघात अन्धकारसमूह, अतनीयस्तया बाहुल्येन, मोढु असमर्थेषु अशक्तेष्विव, उद्वमत्सु उद्गिरत्सु सत्सु । कामिनीनां प्रमदाना निधुवनलीला सुरतक्रीडा तद्दर्शनार्थं उद्ग्रीविकाः उच्चैःकन्धरोन्नमनरूपाः क्रियाः तासां शतस्य दानेन खिन्नेषु श्रान्तेष्विव, विविधाः नानाविधाः ये विलासाः विभ्रमाः तैः चित्राणि आश्चर्यावहानि यानि सुरतानि सङ्गमाः

तसाक्षिषु, शरणागतमिवाधोनिलीनं तिमिरसङ्घमवत्सु, दुर्जनवचनेष्विव दग्धस्नेहतया मन्दिमानमुपगतेषु, अतिवृद्धेष्विव दशान्तमुपगतेषु, आपन्नसदीश्वरेष्विव पात्रमात्रावशेषेषु, दानवेष्विव निशान्तमध्यचारिषु, अस्तगिरिशिखरेष्विव पतत्पतङ्गेषु, प्रदीपेषु, अनवरतनिपतितमकरन्दबिन्दुसन्दोहा-

---

तत्र साक्षिषु, शरणागत स्वरक्षणार्थमागतमिव अधोलीन मूलदेशे पुञ्जीभूत, (पक्षे) पादपतित, तादृश तिमिर अन्धकार, अवत्सु रक्षत्सु सत्सु, दुर्जनानां खलानां वचनेष्विव, दग्धस्नेहतया शोषिततैलतया हेतुना, मन्दिमान मान्द्य, उपगतेषु प्राप्तेषु, (पक्षे) दग्धस्नेहतया नष्टप्रेमतया, मन्दिमान सुहृत्कर्मणि शैथिल्य । अतिवृद्धेष्विव अतिजीर्णेष्विव दशान्त वर्त्यन्त (पक्षे) दशायाः अन्तं वार्धक्य । आपन्ना आपद प्राप्ताः ये सदीश्वराः सत्प्रभव. तेष्विव, पात्र दीपभाजन तदेव पात्रमात्र अवशेषः अवशिष्ट येषा तेषु तादृशेषु (पक्षे) पात्र देह. तन्मात्रावशेषेषु, यद्वा, पात्राणि अमात्यादयः तन्मात्रावशेषेषु “पात्र तु भाजने योग्ये देहे तीरद्वयान्तरे” इति कोश । दानवेषु असुरेष्विव निशान्त अन्त पुर तस्य मध्ये चरन्तीति तादृशाः तेषु (पक्षे) निशाया. रात्रे. अन्तमध्ययोः चरन्तीति तादृशेषु । अस्तगिरिशिखरेषु अस्तपर्वताग्रेष्विव पतन्तः पतङ्गा. शलभा येषु तेषु (पक्षे) पतङ्ग सूर्यः । अनवरत अविश्रान्त यथा तथा निपतितानां मकरन्दबिन्दूनां यः सन्दोह समूहः तस्य आस्वादेन जायमानो यो मदः तेन मुग्धानां मूढानां मधुकराणा भ्रमराणां निकुरुबस्य झङ्काररूपरवेण मुखरितेषु सशब्देषु वासागारस्य वासभवनस्य गव-

स्वादमदमुग्धमधुकरनिकुरुम्बझङ्काररवमुखरितेषु, म्लानिमानं उपगच्छत्सु वासागारकुसुमोपहारेषु, विगलत्कुन्दैरलकैः प्रियतमविरहशोकान् बाष्पबिन्दूनिवोत्सृजतीषु, वाचालतुलाकोटिभिः चरणपल्लवैः प्रियतमगमननिरोधमिव कुर्वतीषु, रजनीशेषसुरतपरिश्रमविगलितकेशपाशदरदलितमाधवीमालापरिमललुब्धमधुकरनिकुरुम्बपक्षानिलपीतनिदाघजलशीकरकणिकासु, उद्वेल्लद्भुजवल्लीकङ्कणझ-

न्धिषु कुसुमोपहारेषु पुष्पोपहारेषु म्लानिमानं ग्लानिं उपगच्छत्सु प्राप्तेषु सत्सु, प्रियतमाना प्रेयसां विरहशोकान् विश्लेषदुःखान बाष्पबिन्दून अस्रजलकणान् उत्सृजतीष्विव मुञ्चन्तीष्विव, विगलन्ति कुन्दानि माध्यकुसुमानि येभ्यस्तै तादृशैः अलकैः चूर्णकुन्तलैः, प्रियतमाना गमननिरोधं निर्गमनविघ्नं, कुर्वतीषु आचरन्तीष्विव, वाचाला मुखरा तुलाकोटयः मञ्जीरा, येषु तै तादृशैः चरणपल्लवैः पादाम्बुजैः, रजनीशेषे निशावसाने यत्सुरत दयितसमागमः तेन जायमानेन परिश्रमेण खेदेन विगलिते विस्रस्ते केशपाशे केशसमूहे स्थिताया दरदलितायाः ईषद्विकसितायाः माधवीमालयाः मालतीकुसुममालाया परिमले सौरभे लुब्धानां सतृष्णाना मधुकराणां भ्रमराणा निकुरुम्बस्य समूहस्य (सबन्धी) यः पक्षानिलः पक्षवात तेन पीताः शोषिता, निदाघजलशीकराणा स्वेदजलबिन्दूना कणिकाः लवाः यासां तासु, उद्वेल्लन्तीना चञ्चलाना भुजवल्लीनां भुजलतानां कङ्कणाना करभूषणाना झणात्कारेण सुभगासु मनोज्ञासु, नखपदेषु प्रियतमकृतनखक्षतेषु दष्टः लीन य केशपाशः तस्य विनिर्मोकेन मोचनेन जायमानया पीडया व्यथया कृत मन्त्रित य मा-

णात्कारसुभगासु, नखपददष्टकेशपाशाविनिर्मोकवेदनाकृतसीत्कारविनिर्गतदुग्धमुग्धदशनकिरणधवळितभोगावासासु, पुनर्दर्शनपृच्छाविधुरसखीजनानुक्षणवीक्ष्यमाणप्रियतमासु, क्षणदागतसुरतवैयात्यवचनशतस्मारकगृहशुकचाटुव्याहृतिक्षणजनितमन्दाक्षासु, शरद्वासरलक्ष्मीष्विव नखालंकृतपयोधरासु, आसन्नमरणास्विव जीवितेशपुराभिमुखीषु वसन्तवनराजि-

---

त्कार. सीत् इति ध्वनिः तेन विनिर्गता बहिर्निस्सृताः दुग्धवत् क्षीरवत् धवळा शुभ्रा ये दशनकिरणा दन्तांशव· तै धवळिताः नैर्मल्यमापादिताः भोगावासा. क्रीडाभवनानि याभिस्तासु, पुनर्दर्शने विषये या पृच्छा प्रश्न तत्र विधुरै. विक्लवै, ( धार्ष्ट्येनाभिमुखीभूय पुनर्दर्शनविषयकप्रश्न कर्तुं असमर्थैरित्यर्थ ) सखीजनै. वयस्याजनैः अनुक्षण क्षणे क्षणे (वीप्सायामव्ययीभाव·) वीक्ष्यमाणाः विलोक्यमाना प्रियतमा· दयिता· याभिस्तासु, क्षण कामोत्सव त ददातीति क्षणदा रात्रि तद्गतानि यानि सुरतवैयात्यवचनानि निधुवनकालिकधार्ष्ट्यव्याहाराः तेषां शतस्य स्मारिकाभि· स्मृतिविधायिनीभि· गृहशुकाना लीलागृहगतानां शुकानां चाटुव्याहृतिभि· मनोज्ञव्याहारैः क्षणकाल जनित उत्पादित मन्दाक्ष ह्री यासां तासु, ‘मन्दाक्षं ह्रीस्त्रपा व्रीडा’ इत्यमर.। शरद्वासराणा शरत्कालदिवसानां लक्ष्मीषु शोभास्विव, नखैः प्रियतमनखक्षतै· अलंकृतौ भूषितौ पयोधरौ स्तनौ यासां तासु, (पक्षे) ख आकाश तत्रालङ्कृता· पयोधराः मेघाः यासां न भवन्ति ताः तथा, आसन्न सन्निहित मरणं मृति यासां ताः तास्विव, जीवितेशाः प्राणनाथाः तेषां पुराणि शरीराणि तत्राभिमुखीषु उन्मुखीषु (पक्षे) जीवितेशो यमः तस्य

ष्विवोत्कलिकाबहुलासु प्रियैरालिङ्गयमानासु कामिनीषु, आन्दोलितकुसुमकेसरे केशरेणुमुषि रतिरणितनूपुरमणीनां रमणीनां विकचकुमुदाकरे मुदाकरे सङ्गभाजि प्रियविरहितासु रहितासु सुखेन मुर्मुरचूर्णमिव समन्तादर्पके दर्पकेषुदहनस्य दूरप्रसारितकोकप्रियतमारुते मारुते वहति, जघन-

---

पुर नगर नदभिमुखीषु, वसन्तवनराजिष्विव मधुमासोपवनपरम्परास्विव, उत्कलिकाभि उत्कण्ठाभि. बहुलासु (पक्षे) उद्गताभि कलिकाभि. कोरकै बहुलासु, तादृशीषु कामिनीषु, प्रियै दयितै:,आलिङ्गयमानासु सतीषु, आन्दोलिताः चलिता कुसुमकेसरा पुष्पसबन्धिन किञ्जल्का. येन स. तादृशे, रतौ सुरतसमये रणिता शब्दायमानाः नूपुरमणय पादकटकरत्नानि यासा तासा, रमणीनां सुन्दरीणा, केशरेणून् कुन्तलधृतकुसुमपरागान् मुष्णाति अपहरतीति मुट् तादृशि, मुद प्रीति आ समन्तात् करोतीति मुदाकर तस्मिन्, विकचाना विकसिताना कुमुदाना कैरवाणा आकरे आवासदेशे सरसि, सङ्गभाजि सम्पर्कवति, यद्वा, कुमुदाकरे सङ्गभाजि मुदाकरे इत्यप्यन्वयस्सुगम । कुमुदाकरसङ्गित्वादेवास्य मुदाकरत्वमिति भावः । प्रियै. दयितैः विरहितासु विश्लेषितासु अत एव सुखेन सौख्येन रहितासु कामिनीषु (विषये) दर्पकेषुदहनस्य मन्मथशराग्नेः, मुर्मुरचूर्णमिव तुषाग्निकणमिव समन्तात् अर्पके 'तस्य कामोद्दीपकत्वादिति' भाव । दूरं प्रसारितानि दीर्घता आपादितानि कोकप्रियतमानां चक्रवाकीना रुतानि शब्दा येन सः तादृशि, मारुते पवने, वहति वाति सति, जघनं कटिप्रदेशः तदेव मदननगर मन्मथनिवासनगर तस्य तोरणस्रजा वहिर्द्वारदेशनिवद्धमालिकयेव स्थितया मन्मथ एव महानिधिः

मदननगरतोरणस्रजा मन्मथमहानिधिजघनकोशमन्दिरक-
नकप्राकारेण रोमावलिरूपलतालवालवलयेन जघनचन्द्रम-
ण्डलपरिवेषेण विततत्रिभुवनविजयप्रशस्तिवर्णपङ्क्तिकनकप-
त्रेण मकरकेतोः सकलहृदयवन्दीजननिवासगृहपरिखावल-
येन सकलजगल्लोचनविहङ्गमजघनवासलासककनकशलाका-
गुणेन नवमेखलादाम्ना परिकलितजघनस्थलां, उन्नतपयोधर-
भारान्तरितमुखचन्द्रदर्शनाप्राप्तिवेदनयेव गुरुतरनितम्बवि-

---

जघनमेव कोशमन्दिरं भाण्डागारं तस्य कनकप्राकारेण सौवर्णशालेनेव.
रोमावलिः रोमराजिः तद्रूपायाः लतायाः वीरुधः आलवालवलयेनेव अधो-
देशनिबद्धवर्तुलावटप्रदेशेनेव, जघनमेव चन्द्रमण्डलं इन्दुबिम्बं तस्य
परिवेषेण परिधिनेव, मकरकेतोः मन्मथस्य त्रिभुवनविजयः त्रिलोकवि-
जयः. तेन जायमाना या प्रशस्तिः उत्कर्षः तद्वाचकानां वर्णानां अक्षराणां
मरकतरत्नरूपाणां पङ्क्तिः आवलिः यस्मिंस्तत्तादृशेन कनकपत्रेण स्वर्ण-
पत्रेणेव स्थितेन, सकलानां पुंसां हृदयान्येव वन्दीजनाः निगडिताः पुरुषाः
तेषां निवासगृहं जघनरूपं यत् कारागृहं तस्य परिखावलयेन जलदुर्गेणेव
स्थितेन, सकलानि जगल्लोचनानि लोकलोचनान्येव विहङ्गमाः पक्षिणः
(तद्ग्रहणार्थेन) जघनमेव वासलासकः प्रक्षिप्तग्रहणशीलः पुरुषः तस्य कनक-
शलाकागुणेन स्वर्णशलाकाबन्धनरज्जुना (सकलजनहृदयाकर्षकेणोत्ति भा-
वः) नवेन मेखलादाम्ना रशनया, परिकलितं संवीतं जघनस्थलं यस्याः
ताम्, उन्नताभ्यां पयोधरभाराभ्याम् अन्तरितं निरोहितं यन्मुखचन्द्रदर्शनं
वदनशशिनिरीक्षणं तस्य अप्राप्तिवेदनयेव अलाभदुःखेनेव, गुरुतरं अत्य-
न्तं गुरु यन्नितम्बबिम्बं पयोधरकुम्भौ स्तनकलशौ च ते. निरुद्धौ यौ

म्बपयोधरकुम्भनिरुद्धोभयपार्श्वपीडाजनितायासेनेव मम मूर्ध्नि स्थितयोरनयोरियत्प्रमाणयोः स्तनकलशयोः कथम्मय्येव पातो भविष्यतीति चिन्तयेव गृहीतगुरुकळत्रानुशयेनेव विधातुरतिपीडयतो हस्तपाशजनितायासेनेव क्षीणतरतामुपगतेन मध्यभागेनालंकृतां, अनुरागरत्नपूरितकनकपरुवकाभ्यां चूचुकमुद्रासनाथाभ्यां विधिना गिरिसारेणेव चूचुकच्छलेनातिगुरुपरिणाहतया पतनभयकीलिताभ्यामिव, हृच्छयविलेपनचातुरिकाविभ्रमाभ्यां, सकलावयवनिर्मितिशेषलावण्यपु-

---

उभयपार्श्वौ ताभ्या जनिता या पीडा तज्जनितायासेनेव, मम मूर्ध्नि मस्तके स्थितया इयत्प्रमाणयो एतावत्परिमाणयो अनयो स्तनकलशयोः कुचकलशयो , मय्येव, कथ, पात. पतन, भविष्यति, इति इत्थ, चिन्तयेव व्याकुलतयेव, गृहीत परिगृहीत यत् गुरुकळत्र आचार्यभार्या तन्निबन्धनानुशयेनेव पश्चात्तापेनेव, वस्तुतस्तु, गुरुकळत्र महज्जघन । अतिपीडयत. सृष्टिसमये तद्देशावच्छेदेन सौक्ष्म्यसम्पादनाय दृढ निष्पीडयत विधातु. ब्रह्मण , हस्तपाशेन करेण जनित य आयास तेनेव क्षीणतरता अतिकार्श्य, उपगतेन प्राप्तेन, मध्यभागेन वलग्नदेशेन, अलङ्कृता प्रसाधिता, चूचुके कुचाग्रे तएव मुद्रे तत्सनाथाभ्या तत्सहिताभ्यां, अनुरागा एव रत्नानि तै. पूरितकनकपरुवकाभ्या सौवर्णसम्पुटाभ्या, विधिना ब्रह्मणा कर्त्रा, चूचुकच्छलेन कुचाग्रव्याजेन गिरिसारेण कालायसेन, अतिगुरुपरिणाहतया अतिविशालतया हेतुना जात यत्पतनभय तेन कीलिताभ्यामिव, हृच्छय काम. तस्य विलेपन अङ्गराग तन्निक्षेपणार्ह यच्चातुरिक नारिकेलफलकृत भाजन समुद्गको वा तद्विभ्रमाभ्या, सकलाना अवयवाना

ञ्जाभ्यामिव, रोमावलीलताफलभूताभ्यां, कन्दर्पदर्पकशिलाचूर्णपूर्णकलशाभ्यामिव, हृदयतटाककमलमुकुलाभ्यां, हारलतामृणाललोभनिलीनचक्रवाकाभ्यां, हारलतारोमावलीगङ्गायमुनासङ्गमव्याजप्रयागतटाभ्यां, अशेषजनहृदयपतनादिव सञ्जातगौरवाभ्यां, त्रिभुवनविजयपरिश्रमखिन्नस्य मकरकेतोर्विश्रमविजनावासगृहाभ्यां, पयोधराभ्यां, समुद्भासमानां, मुखचन्द्रसततसन्निहितसन्ध्यारागेण, द्विजमणिरक्षासिन्दूर-

---

अङ्गानां निर्मिते निर्माणस्य शेष यल्लावण्य सौन्दर्य तत्पुञ्जाभ्यां समुदायाभ्यामिव, रोमावली रोमराजिः सैव लता तस्या फलभूताभ्यां फलवदाचरद्भ्यां, कन्दर्पः मदनः तस्य दर्पक दर्पोत्पादक य शिलाचूर्ण. तेन पूर्णाभ्यां कनककलशाभ्यामिव स्वर्णघटाभ्यामिव, हृदयमेव तडाकः तस्य कमलमुकुलाभ्यां, हारएव मौक्तिकसरएव मृणाल नाळ तत्र लोभ भक्ष्याशा तेन निलीनाभ्या चक्रवाकाभ्यामिव, हारलता मुक्तासर रोमावली रोमलता तद्रूपयोर्गङ्गायमुनयोः सङ्गम यत्र तादृशाभ्या व्याजप्रयागतटाभ्यां पर्यायप्रयागतीरदेशाभ्यां (गङ्गायमुनासङ्गमप्रदेशस्य प्रयाग इति नाम) अशेषजनानां समस्तप्राणिनां हृदयपतनादिव, सञ्जात समुत्पन्न गौरव ययोस्ताभ्या, त्रिभुवनविजयेन त्रिलोकविजयेन जात. यः परिश्रमः आयासः तेन खिन्नस्य श्रान्तस्य, मकरकेतोः मदनस्य, विश्रमार्थौ विजने विविक्ते ये गृहे ताभ्यां, पयोधराभ्यां स्तनमण्डलाभ्यां, समुद्भासमानां दीप्यमाना, मुखचन्द्रस्य वदनशशिनः सततसन्निहित निरन्तरसान्निध्यविधायी सन्ध्यारागेणेव सन्ध्याकालिकरक्तवर्णेनेव, द्विजमणयः दन्तमयानि रत्नानि तद्रक्षार्थं विहिता या सिन्दूरमुद्रा सिन्दूरचिह्न तां अनुकरोति

मुद्रानुकारिणा, निस्सरदाभ्यन्तररागेणेव रञ्जितेन, रागसाग-रविद्रुमशकलेनेव, अधरपल्लवेन, शोभमानां, तरुणकैतकदळ-द्राघीयसा, पक्ष्मळचटुलालसेन, हृदयावासगृहावस्थितहृच्छ-यविलासिनो गवाक्षशङ्कामुपजनयता, सरागेणापि निर्वाणं जनयता, गतिप्रसरनिरोधकश्रवणकृतक्रोधेनेवापाङ्गलोहितेन धवळयतेव जगदखिलं, उत्फुल्लकमलकाननसनाथमिव गगन-तलं कुर्वता, दुग्धाम्भोधिसहस्राणीवोद्वमता, कुन्दकुसुमनिर्ली-

---

अनुसरतीति तेन, निस्सरन् बहिः प्रादुर्भवन् य आभ्यन्तरः अन्तःस्थितो रागः तेन रञ्जितेनेव अलङ्कृतेनेव स्थितेन, राग एव सागरः समुद्रः तस्य विद्रुमशकलेनेव प्रवाळखण्डेनेव, अधरपल्लवेन रदनवाससा, शोभमाना, तरुणं यत् कैतकदळं तद्वत् द्राघीयसा दीर्घतरेण, पक्ष्माणि नेत्रलोमानि तत्सहितं चटुलं चञ्चलं अलसं आलस्ययुक्तं च तेन, हृदयमेव आवासगृहं तत्रावस्थितस्य हृच्छयविलासिनो मन्मथशृङ्गारिणः, गवाक्षशङ्का, उपजनयता रचयता, सरागेणापि रागयुक्तेनापि, निर्वाणं मोक्षं जनयतेति विरोधाभास, विषयरागाक्रान्तस्य मोक्षप्रदत्वासम्भवात् । रागो रक्तिमा तद्युक्तेन निर्वाणं सुखं जनयतेति परिहारः । गतिप्रसरस्य गमनस्य निरोधकयोः विघातकयोः श्रवणयोः (विषये) कृतक्रोधेनेव भाविततरोषेणेव अपाङ्गयोः लोहितेन रक्तेन, अखिलं समस्तं, जगत् भुवनं, धवळयतेव श्वेतयतेव, गगनतलं आकाशं, उत्फुल्लेन विकस्वरेण कमलकाननेन सनाथमिव युक्तमिव, कुर्वता विदधानेन, दुग्धाम्भोधीनां क्षीरसमुद्राणां सहस्राणि उद्वमतेव उद्गिरतेव, कुन्दकुसुमयोः माघ्यपुष्पयोः

नामुत्पलमालामुपहसन्तीं, नयनयुगळेन भूषितां, दशनरत्नतुलादण्डेनेव, नयनामृतसिन्धुसेतुबन्धेनेव, यौवनमन्मथमत्तवारणवरण्डकेनेव, नासावंशेन परिष्कृतां, विलोचनकुवलयभ्रमरपङ्क्तिभ्यां, मुखमदनमन्दिरतोरणमालिकाभ्यां, रागसागरवेणिकाभ्यां, यौवननर्तकलासिकाभ्यां, भ्रूलताभ्यां, विराजितां, घनसमयाकाशलक्ष्मीमिवोल्लसद्धारपयोधरां, जय-

---

निलीना संश्लिष्टा, उत्पलमाला नीलोत्पलश्रेणि, उपहसन्ती परिहसन्ती तत्तुल्येनेत्यर्थः । नयनयुगळेन नेत्रयुगेन, भूषिता अलङ्कृता, दशना एव रत्नानि तेषां तुलादण्डेनेव तद्विभक्तानिर्यक्पकथटासन्बन्धिदण्डेनेव, नयनमेवामृतसिन्धुः तस्य सेतुबन्धेनेव, यौवनं तारुण्यं मन्मथः मदनः तद्रूपौ यौ मत्तवारणौ गन्धहस्तिनौ तयोः वरण्डकेनेव मध्यवर्तिभित्तिदेशेनेव (हस्तिपकाः मध्ये भित्तिं परिकल्प्योभयपार्श्वयोर्गन्धहस्तिनौ योधयन्तीति प्रसिद्धिः ।) नासावंशेन नासिकया, परिष्कृता अलङ्कृता, विलोचने एव कुवलये नीलनीरजे तयोः भ्रमरपङ्क्तिभ्यां भृङ्गमालारूपाभ्यां, मुखमेव मदनमन्दिरं मन्मथगेहं तस्य तोरणमालिकाभ्यां बहिर्द्वारनिबद्धवन्दनमालिकाभ्यां, राग एव सागरः समुद्रः तस्य वेणिकाभ्यां प्रवाहाभ्यामिव, यौवनमेव नर्तकः तस्य लासिकाभ्यां नर्तकीभ्यां, भ्रूलताभ्यां, विराजिता प्रकाशिताम्. घनसमयः वर्षाकालः तस्य आकाशलक्ष्मीमिव गगनशोभामिव, उल्लसन् हारः मुक्ताहारः ययोस्तौ तादृशौ पयोधरौ स्तनौ यस्यास्सा ताम्, पक्षे उल्लसन्ती भासमाना धारा जलधारा येषां ते तादृशाः पयोधराः मेघाः यस्यां सा ताम्, जयघोषणा जयशब्दः तदापन्ना तत्प्राप्ता या नरपतिमूर्तिः तामिव, उल्लसन्त्यां तुलाकोटिभ्यां पादाङ्गदाभ्यां प्रतिष्ठितां आश्रिताम्,

घोषणापन्ननरपतिमूर्तिमिवोल्लसत्तुलाकोटिप्रतिष्ठितां, सुयोधनधृतिमिव कर्णविश्रान्तलोचनां, वामनलीलामिव दर्शितवलिभङ्गाम्, वृश्चिकराशिरविस्थितिमिवातिक्रान्तकन्यातुलां, उषामिवानिरुद्धदर्शनसुखां, शचीमिव नन्दनेक्षणरुचिं, पशुपतिताण्डवलीलामिवोल्लसच्चक्षुश्श्रवसं, विन्ध्याटवीमिवोत्तुङ्गश्यामलकुचां, वानरसेनामिव सुग्रीवाङ्गदशोभितां, भास्व-

---

(पक्षे) उल्लसन्ती तुलायाः सादृश्यस्य कोट्या अग्रे प्रतिष्ठिता च । (निरुपमामिति यावत्) सुयोधनस्य दुर्योधनस्य धृतिमिव प्रीतिमिव कर्णयोः श्रवणयो विश्रान्ते अवसानं प्राप्ते लोचने नयने यस्यास्ता. (पक्षे) कर्णे राधेये । वामनस्य उपेन्द्ररूपस्य भगवतः लीलामिव, दर्शिता वलिविभङ्गा त्रिवलीतरङ्गाः यया ता । (पक्षे) दर्शितः बलेः वैरोचनेः भङ्गः पराजयः यया ता । वृश्चिकराशौ रविस्थितिमिव सूर्यस्थितिमिव, अतिक्रान्ता अतीता कन्यातुला कन्यासादृश्यं यया ता । (पक्षे) कन्यातुले राशी । उषामिव बाणासुरसुतामिव, अनिरुद्धं अनिवारितं दर्शनसुखं चक्षुःसुखं यया ता (पक्षे) अनिरुद्धः प्रद्युम्नपुत्रः तस्य दर्शनं आलोकनं सुखकरं यस्यास्ता । शचीं इन्द्राणीमिव, नन्दना प्रीतिकरी ईक्षणरुचिः नेत्रकान्तिः यस्याः ता (पक्षे) नन्दनं इन्द्रोद्यानं तस्य ईक्षणे रुचिः प्रीतिः यस्यास्ता. पशुपतेः रुद्रस्य ताण्डवलीला नर्तनलीला तामिव उल्लसत् चक्षुः नेत्रं श्रवः श्रोत्रं यस्यास्ता, (पक्षे) उल्लसन्तः चक्षुश्श्रवसः सर्पाः यस्यां ता, विन्ध्याटवी विन्ध्यवनं तामिव, उत्तुङ्गाः श्यामाः वृक्षविशेषाः लकुचाः लिकुचवृक्षाश्च यस्यां सा ता (पक्षे) उत्तुङ्गौ उन्नतौ श्यामलौ चूचुकभागे नीलौ कुचौ स्तनौ यस्यास्ता, वानरसेना प्लवङ्गवाहिनीमिव सुग्रीवा शोभना

ताऽलङ्कारेण, श्वेतरोचिषा स्मितेन लोहितेनाधरेण, सौम्ये दर्शनेन, गुरुणा नितम्बबिम्बेन, सितेन हारेण, शनैश्चरेण पादेन, विकचेन लोचनोत्पलेन ग्रहमयीमिव, संसारभित्ति चित्रलेखामिव त्रैलोक्यरङ्गस्य, रसायनसिद्धिमिव यौवनस्य, सङ्कल्पवृत्तिमिव शृङ्गारस्य, सङ्केतभूमिमिव लावण्यस्य, निधानमिव कौतुकस्य, विजयपताकामिव मकरध्वजस्य, आजिभूमिमिव मदनस्य, सम्मोहिनीमिव सर्वेन्द्रि

---

कन्धरा अङ्गद भुजवलय च ताभ्या शोभिता, (पक्षे) सुग्रीवेण अङ्गदे वालिपुत्रेण च शोभिता, भास्वता प्रकाशमानेन (सूर्येणेत्यपि) अलङ्कारेण प्रसाधनेन, श्वेतानि धवळानि रोचींपि कान्तय यस्य तत् तादृशेन, (चन्द्रेण च) स्मितेन हासेन, लोहितेन रक्तेन (अङ्गारकेण) अधरेण सौम्ये मनोज्ञेन (बुधेन) दर्शनेन, गुरुणा पृथुना (बृहस्पतिना) नितम्बबिम्बे कटिपश्चाद्भागेन, सितेन धवळेन (शुक्रेण) हारेण मौक्तिकसरेण, शनैश्चरेण मन्दसञ्चारसहितेन (शनिना) पादेन विकचेन फुल्लेन (राहुणा केतुना च) लोचनोत्पलेन नयनेन च, ग्रहमयीमिव सूर्यादिज्योतिर्ग्रहस्वरूपिणीमिव स्थिता, त्रैलोक्यरङ्गस्य लोकत्रयरूपरङ्गस्थलस्य (सम्बन्धिनी) संसार एव भित्ति कुड्य तत्रस्था चित्रलेखामिव आलेख्यरचनामिव, यौवनस्य तारुण्यस्य, रसायन दिव्यौषध तत्सिद्धिमिव, शृङ्गार. रसराजः तस्य सङ्कल्प मानस कर्म तस्य वृत्तिमिव, लावण्यस्य सौन्दर्यस्य, सङ्केतभूमिमिव परस्परसमागमयोग्यस्थलमिव, कौतुकस्य कौतूहलस्य, निधानमिव निक्षेपस्थलमिव, मकरध्वजस्य मन्मथस्य, विजयपताकामिव जयप्रख्यापक केतुस्तम्भमिव, मदनस्य मन्मथस्य आजिभूमिमिव युद्धरङ्गमिव, सर्वेन्द्रि

याणां, मोहनशक्तिमिव मदनस्य, विहारस्थलीमिव सौन्दर्यस्य, मित्रविलासालयशालामिव सौभाग्यस्य, आकर्षणमन्त्रसिद्धिमिव मनसिजस्य, चक्षुर्बन्धनमहौषधिमिव मन्मथेन्द्रजालिनः, त्रिभुवनविलोभनसृष्टिमिव प्रजापतेः, अष्टादशवर्षदेशीयां कन्यामपश्यत् स्वप्ने ॥

अथ तां प्रीतिविस्फारितेन चक्षुषा पिबन्निव जनितेर्ष्ययेव निद्रया चिरं सेवितया मुमुचे । अथ स प्रबुद्धस्तु विषसरसीव दुर्जनवचसीव निमग्नमात्मानमवधारयितुं न शशाक ।

---

याणा सम्मोहिनीमिव मोहजनकौषधिमिव, मदनस्य मारस्य, मोहनशक्तिमिव मोहोत्पादकसामर्थ्यमिव, सौन्दर्यस्य विहारस्थलीमिव क्रीडाभूमिमिव, सौभाग्यस्य कमनीयताया, मित्रविलासालयशालामिव सुहृद्विहारभवनप्रदेशमिव, मनसिजस्य मदनस्य आकर्षणमन्त्रः कामिजनहृदयवशीकरणसाधनमन्त्र तत्सिद्धिमिव, मन्मथ एव इन्द्रजाली मायावी तस्य, चक्षुर्बन्धनमहौषधि द्रष्टृजननयनतिरोधायकमूलिकामिव, प्रजापते ब्रह्मण, त्रिभुवनस्य त्रिलोक्याः विलोभनी अभिलाषोत्पादिका सृष्टि निर्मितिमिव, अष्टाधिकाः दश अष्टादश अष्टादशवर्षाः यस्यास्सा अष्टादशवर्षा ईषदूना अष्टादशवर्षा अ .देशीया । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इत्यनेन देशीयर्प्रत्यय । ता, कन्यां नवयौवना प्रमदा, स्वप्ने, अपश्यत् व्यलोकयत् ।

**अथेत्यादि** । अथ स्वप्ने तन्निरीक्षणानन्तर, प्रबुद्धः प्रबोधं प्राप्तः, स., विषसरसीव गरळरसपूरिततटाक इव, दुर्जनाना खलानां वचसीव, निमग्न॰ अवगाढ, आत्मान स्व, अवधारयितु अयमित्थमिति निश्चेतु, न

तथाहि । क्षणमाकाशे तदालिङ्गनार्थं प्रसारितबाहुयुगलः, एह्येहि प्रियतमे मागच्छ मागच्छेति दिक्षु विदिक्षु च विलिखितामिव, उत्कीर्णामिव चक्षुषि, निखातामिव हृदये, प्रियतमामाजुहाव । ततस्तत्रैव शय्यातले निलीनो निषिद्धाशेषपरिजनो दत्तकवाटः परिहृतताम्बूलादिसकलोपभोगस्तं दिवसमनयत् । तथैव निशामपि स्वप्नसमागमेच्छया कथमप्यनैषीत् । अथ तस्य प्रियसखो मकरन्दो नाम कथमपि लब्धप्रवे-

---

शशाक न समर्थोऽभूत् । तमेवार्थं विशदयति । **तथाहीत्यादिना** ॥ आकाशे वियति, क्षणं निमिषमात्रं कालं, तदालिङ्गनार्थं तस्याः परिरम्भणाय, प्रसारितं बाहुयुगलं येन स तादृशस्सन्, एह्येहि आगच्छ आगच्छ, हे प्रियतमे प्राणवल्लभे, मागच्छ मागच्छ, इति तां आजुहावेति सम्बन्धः । तां कीदृशीमित्यत आह, **दिक्ष्वित्यादिना** ॥ दिक्षु सर्वासु आशासु, विदिक्षु दिक्कोणेषु च विलिखितां चित्रितामिव, चक्षुषि नेत्रे, उत्कीर्णामिव प्रत्युप्तामिव, हृदये मनसि निखातामिव अन्तर्निमज्जितामिव । **तत इति** । तत्रैव शय्यातले शयनप्रदेश एव, निलीनः निभृतं निषण्णस्सन्, निषिद्धाः निवारिताः अशेषाः समग्राः परिजनाः येन सः, दत्तं पिहितं कवाटं अररं येन सः, परिहृताः दूरीकृताः ताम्बूलकर्पूरमध्याः वीटीं तदादयः सकलाः उपभोगाः स्रक्चन्दनादिसम्भोगसामग्र्यः येन तादृशस्सन्, तं दिवसं वासरं, अनयत् अयापयत् । **तथैवेति** । तथैव पूर्वोक्तप्रकारेणैव, निशामपि रात्रिमपि, स्वप्नसमागमेच्छया, कथमपि अतिप्रयासेन अनैषीत् । **अथेति** । तस्य, प्रियश्चासौ सखा च प्रियसखः "राजाहस्सखिभ्यष्टच्" इत्यनेन टच् समासान्तः । कथमपीत्येकमखण्डं अव्ययम् । कथमपि अति-

शदर्शनः कन्दर्पसायकप्रहारपरवशं कन्दर्पकेतुमुवाच । सखे! किमिदमसाम्प्रतमसाधुजनोचितमाचारमाश्रितोऽसि । तवैतदालोक्य वितर्कडोलासु निवसन्ति सन्तः । खलाः पुनस्त्वदनुचितमनिष्टमाचारमाचरन्ति । अनिष्टोत्पादनरसोत्तरं हि भवति खलहृदयम् । कोनामास्य तत्त्वनिरूपणे समर्थः । तथाहि । भीमोऽपि न बकद्वेषी, आश्रयाशोऽपि मातरिश्वा, अतिकटुकोऽपि महारसः, सर्षपस्नेह इव करयुगलालितो-

---

प्रयत्नेन, प्रवेशश्च दर्शनच प्रवेशदर्शने ते लब्धे येन तादृशस्तन, कन्दर्पसायकस्य मदनवाणस्य प्रहारेण अभिघातेन परवश अस्वतन्त्र, त, उवाच । ब्रुवो लिटि रूपम् । **सख इति**। मखे मित्र, इदं मया अभ्यक्ष्यमाण त्वदवस्थान, कि किंनिबन्धन । असाधुजनस्य दुष्टस्य उचित अर्ह, साधुजनानर्हंवा । अत एव, असाम्प्रत अयुक्त, आचार, आश्रितोऽसि । **तवेति** । वितर्कडोलासु सशयडोलासु । **खला इति** । खला दुर्जना पुन, त्वदनुचित त्वद्विरुद्ध, आचरन्ति तन्वन्ति । **अनिष्टेति** । खलाना दुर्जनाना हृदय मानस, अनिष्टस्य अहितस्य उत्पादने यो रस रुचिः तेनोत्तर अधिक, भवति । **क इति** । अस्य खलस्य, तत्त्वनिरूपणे याथार्थ्यपरामर्शे कोनाम समर्थ नकोऽपीत्यर्थ । तमेव दर्शयति । **तथाहीत्यादिना**। भीमोऽपि वृकोदरोऽपि बकस्य तदाख्यस्यासुरस्य न द्वेष्टीति विरोधाभास । भीम भयङ्कर, नवकान् स्तुत्यान् द्वेष्टीति नवकद्वेषी, आश्रयाश अग्नि सोऽपि, मातरिश्वा वायुरिति विरोध, (अन्यत्र), आश्रयभक्षक, मातरि जनन्या तत्सदृशे पोषके वा, श्वा कुक्कुरवत् वर्तते, अतिकटुकोऽपि अतिकटुरसस्वरूपोऽपि, महारस मधुररस इति विरोधः,

ऽपि शिरसा धृतोऽपि न काटवं जहाति । तालफलरस इवा-
पातमधुरः परिणामे विरसस्तिक्तश्च । पादरज इवावधूतोऽपि
मूर्धानं कषाययति । विषतरुप्रसूनमिव यथा यथा अनुभूयते
तथा तथा मोहमेव द्रढयति । नीचदेशनद्या इव न वारिवि-
रहोऽस्य जायते । निदाघदिवस इव बहुमत्सरस्सुमनसां
सन्तापं वहति । अन्धकार इव दोषानुबन्धचतुरः विश्वक-

(पक्षे) अतिमत्सरी, महान् अरम सर्पप तुन्दुभ "सर्पपे तु द्वौ तुन्दु-
भकदम्बकौ" इत्यमरः । स इव करयुगेन हस्तयुग्मेन लालितोऽपि,
शिरसा मूर्ध्ना धृतोऽपि, काटव कटुत्व, अप्रियत्व, न जहाति न त्यजति ।
तालफल तृणराजफल तस्य रस इव, आपातमधुर उपक्रमे एव माधुर्य-
युक्त 'आपातस्स्यादुपक्रमे' इति कोश । परिणामे अन्ते, विरस. रसहीन ,
तिक्तश्च (पक्षे) उपक्रमे हृद्य अन्ते वैरस्यहेतु द्वेपी च । पादरज इव
चरणधूलिरिव अवधूतोऽपि उद्धृतोऽपि (पक्षे) तिरस्कृतोऽपि, मूर्धान
मौलि, कषाययति धूसरयति, (पक्षे) प्रधान पीडयति । विषतरो कि-
म्पाकस्य प्रसून पुष्पमिव, यथा यथा येन येन प्रकारेण अनुभूयते तथा
तथा, मोह मूर्च्छा, (पक्षे) वैचित्त्यमेव, द्रढयति स्थिरीकरोति ॥ नीचदेशे
निम्नदेशस्थिताया. नद्या इव, अरिविरहः शत्रुविरह , अस्य, नवा जायते
(नवेति निषेधार्थकमेकमव्ययम्) (पक्षे) जलाभाव.। निदाघदिवस ग्री-
ष्मकालदिनामिव, बहुमत्सर अतिमात्सर्यशाली, सुमनसा विदुषा सन्ताप
मन.खेद, वहति प्रापयति । (पक्षे) मत्सरा मक्षिका , सुमनस मालती-
पुष्पाणि । अन्धकारः तमः स इव, दोषानुबन्धे दोषसम्बन्धोद्भावने च-
तुरः समर्थः, विश्वेषां समस्तानां कर्मणा विश्वस्य कर्मणा वा अवलोपने उद्य-

र्यावलोपनोद्यतश्च, रुद्र इव विरूपाक्षः, विष्णुरिव चक्रधरः, शक्राश्वइवोच्चैश्श्रवाः, नदेशजप्रशमी च, स शरस्येव भिन्नस्यापि सततं स्नेहं दर्शयतोऽपि तक्राट इव हृदयं विलोडयति । यक्षबलिरिवात्मघोषमुखरो मण्डलभ्रमणकश्च, मातङ्ग इव स्व-

---

तः सन्नद्धश्च (पक्षे) दोषा रात्रौ अनुबन्ध नैरन्तर्येण सम्बन्ध विकर्तनः सू-र्यः तस्य अवलोपन अदर्शन तस्मिन् उद्यत. । रुद्र ईशान स इव विरूपाक्ष दोषदृष्टि (पक्षे) विरूपाणि विरुद्धरूपाणि सूर्यचन्द्रदहनरूपाणि अक्षीणि यस्य सः । विष्णु मुकुन्द स इव, चक्र छद्म 'चक्र रथ्ये सेनायां छद्मन्यस्त्रान्तरे' इति कोश । (पक्षे) चक्र सुदर्शनाख्य चक्रायुध, शक्राश्व इन्द्रवाह, स इव, उच्चैः शृणोति परोक्तानीति उच्चैःश्रवा देवाज्ञ सत्कुलप्रसूता तान न प्रशमयतीति स तथा । (पक्षे) उच्चैःश्रवा नामतः नदेश समुद्रः तस्माज्जात नदेशज प्रशमायुक्तश्च । स तक्राट इव मन्थदण्ड 'समस्तक्राटवैशाखमन्थमन्थानमन्थगाः' इति कोश । स इव, शरस्येव दध्न इव, सत साधो, भिन्नस्य अविरहितस्यापि, स्नेह प्रेम दर्शयतोऽपि, हृदयं मानस, विलोडयति क्षोभयति । (पक्षे) भिन्न, स्नेह आज्यांश हृदय मध्य । यक्षबलि भूतबलिविशेष स इव, आत्मघोषमुखर स्वप्रशसया वाचाल, मण्डल राष्ट्र तस्य भ्रमणक अनवस्थित्याप्रादकश्च । (पक्षे) आत्मघोष काकः। मण्डल श्वा तद्भ्रमणक भ्रमणोत्पादक । 'वाङ्क्षात्मघोषपरभृत् । मण्डलः कुक्कुरश्वानौ रतिकीलमृगद्विषौ' इति च कोश । मातङ्ग गजः, स इव, स्ववश स्वायत्त आसमन्तात् लोल चञ्चल मुख वचन यस्य, अधरीकृत न्यक्कृत दान द्रव्यत्यागो येन । (पक्षे) स्वस्य वशा करिणी तस्यां लोल सतृष्ण मुख यस्य, अधरीकृत गलित दान मद-

वशालोलमुखोऽधरीकृतदानश्च, वृषभ इव सुरभियानविकलः, कामीव गोत्रस्खलनविकलो वामाध्वानुरक्तश्च, जीर्णरोग इव कळेवरे वचसि मन्दिमानमुद्वहति । वञ्चक इव रक्तः कटपले विभावरीरक्तश्च, परेत इव बन्धुतापदर्शनः, परशु-रिव भद्रश्रियं खण्डयति । कुद्दाल इव दळितगोत्र. क्षमा-

---

जल यस्य । वृषभ. उक्षा, स इव, सुरभिः पण्डित तस्य यान· प्राप्ति· नेन विकल शून्य । यद्वा सुरेभ्य भी अकार्याचरणानिबन्धना भीति तया विकलः (पक्षे) सुरभिः धेनु· तस्या यानेन विकल विह्वल । कामी कामुक स इव, गोत्र कुल तस्मात् स्खलन भ्रंश तेन विकल न्यून ही-न इत्यर्थ । वामाध्वनि वक्रमार्गे अनुरक्तश्च (पक्षे) गोत्रस्खलन नामविप-र्यास. तेन विकल । वामाना स्त्रीणां अध्वनि अनुरक्तश्च । जीर्णरोग इव रोगेण जीर्ण इव, कले मधुरे वरे उत्कृष्टे वचसि वचने मन्दिमान औदा-सीन्य (पक्षे) कळेवरे शरीरे, वचसि व्यवहारे च, मान्द्य अपाटव, उद्वहति । **वञ्चक इवेति** ॥ वञ्चक इव जम्बुक इव, कटपले उत्कोचे रक्त, वि-भाया· महस अवरी अवक्षेपण तत्र रक्तश्च (पक्षे) कटस्य शवस्य पले मांसे रक्त, विभावर्या रात्र्या रक्त. आसक्तश्च । परेत इव गतासुरिव, बन्धूनां समूहः बन्धुता तस्या अपगत नष्ट दर्शनं यस्य स । (पक्षे) बन्धूना तापदर्शन । परशुः व्रश्चनसाधन आयुध स इव, भद्राणा साधूना श्रिय सपदमपि (पक्षे) भद्रश्रिय चन्दन, खण्डयति वृश्चति । **कुद्दाल इवेति** ॥ कुद्दाल खनित्रविशेषः स इव, दलित नाशित गोत्र कुल येन सः, क्षमाभाज. शान्तियुक्तान्. प्राणिन जन्तून्, निकृन्तति हिनस्ति (पक्षे) क्षमा भूमि, प्राणिन वृक्षा, (अद्भिर्विना ग्लायमानप्राणा·

भाजःप्राणिनश्च निकृन्तति। रतिकील इव जघन्यकर्मलग्नो ह्रेपयति साधून्। दुष्टशूर्पश्रुतिरिव काननरुचिरनुगतमपि यवसं सन्ततं नानुमोदते। अबीजादेव जायन्ते, अकाण्डात्प्ररोहन्ति. खलव्यसनांकुराः दुरुच्छेदाश्च भवन्ति। असतां हृदि प्रविष्टो

प्राणिन इत्यभियुक्ता ) । **रतिकीलइवेति** ॥ रतिकील इवा स इव जघन्यंकर्मणि नीचकृत्ये लग्न समक्त , साधून् महत , ह्रेपयति लज्जयति 'येनापत्रपते साधुरसाधुस्तेन तुष्यति' इति न्यायानुसारेणासाधुना चेष्टितेन साधूना लज्जावहमेव स्यादिति भाव. । (पक्षे) जघन्यकर्म सुरत, मार्ग एव सुरताचरणात् मानिना स लज्जावह इति भावः । **दुष्टेति** ॥ दुष्टशूर्पश्रुति दुर्दान्तो गज स इव, का ईषत् आननरुचिः मुखकान्ति यस्य । महता निन्दया खलाना तेजोवधप्राप्तिरिति भावः । यद्वा क आत्मा तस्य अनने प्राणने रुचि इच्छा यस्य । उदरम्भरिरित्यर्थ । यद्वा कुत्सित आनन कानन कुवचन तत्र रुचि यस्य, स तत सन्तत्वेन सहित, अनुगत प्रातिलोम्येन पठित, यवस सवयसमिति यावत । स्निग्धमित्यर्थ । तमपि, नानुमोदते नाभिनन्दति । (पक्षे) कानन अरण्य । अनुगतमपि वदनसविध प्रापितमपि यवस घास सन्तत सदा । खलव्यसनस्य वैलक्षण्यमाह । **अबीजादेवेति** ॥ लोके हि बीजादेवाङ्कुरोत्पत्ति । एते खलव्यसनाङ्कुरास्तु, अबीजादेव जायन्ते बीजमनपेक्ष्यैव उत्पद्यन्ते। निष्कारणा इत्यर्थ । अकाण्डादेव स्कन्धमनपेक्ष्यैव प्ररोहन्ति शाखावृद्धि लभन्ते। यो हि बीजाज्जायते काण्डात् स्कन्धात् प्ररोहति स सूच्छेद भवति । मूर्तत्वात् । इमे तु न तथेति भावः । असतां खलाना, हृदि मनसि, प्रविष्ट दोपलवः, करालायते भयावहो

दोषलवः कराळायते । सतां तु हृदयं न प्रविशत्येव । यदि कथमपि प्रविशति तदा पारद इव क्षणमपि न तिष्ठति । मृगा इव विनोदविन्दोः श्रमगा भवन्ति साधवः । सुखं जनाश्शरत्समया इव भवादृशाः मित्रस्य हृदयं हरन्ति । न च सचेतनाः विसदृशमुपदिशन्ति । अचेतनानामपि मैत्री समुचितपक्षे निक्षिप्ता । तथाहि माधुर्यशैत्यशुचित्वसन्तापशा-

---

भवति । सतां साधूनां तु हृदय मनः, न प्रविशत्येव । न कदाऽपि प्रविशेत् । कथमपि अतिप्रयत्नेन प्रविशति यदि, तदा पारद इव रस इव 'चपलो रसस्सूतश्च पारदे' इत्यमर । क्षणमपि निमिषमात्रमपि न तिष्ठति । साधव सज्जनाः, वीना पक्षिणा नोद प्रेरण वेत्तीति विनोदविन्दुः मृगयुः तस्य, मृगा इव हरिणादिमृगा इव, श्रमेण उपायेन गच्छन्ति वश्यता प्राप्नुवन्तीति श्रमगा । (प्रकृते) विन्दु ज्ञाता, श्रम विद्याश्रमः, प्रयासो वा । वशगा इत्यपि पाठः । तदा वश्या भवन्तीत्यर्थ । **सुखमित्यादि** ॥ भवादृशा युष्मद्विधाः, जना शरत्समया इव, मित्रस्य सुहृद, हृदय मन, सुख सौख्य, प्रापयन्ति । (पक्षे) शोभनाः खजनाः खञ्जरीटाः येषु ते । 'खञ्जरीटस्तु खञ्जनः' इत्यमरः । मित्रस्य सूर्यस्य हृदय मण्डलमध्य, सुख मेघोपरोधाभावेन निरर्गळप्रकाशलक्षण सौख्य प्रापयन्ति । सचेतनाः चैतन्यशालिनः विसदृश विरुद्ध यथा तथा नोपदिशन्ति न कथयन्ति । अचेतनानामपि चैतन्यरहितानामपि वस्तूनां मैत्री स्नेहः, समुचितपक्षे परिचितविषये समीचीनपक्षे अनुरूपविषये वा । निक्षिप्ता निहिता । तामेव विशदयति । **तथाहीत्यादिना** ॥ माधुर्यादिभिः गुणैः, पयः पयः इति क्षीरनीरयोरेकशब्दवाच्यत्वसाम्याच्च

न्तिभिः पयः पय इति शब्दसाम्यान्मिलतामुपगतस्य मत्सङ्गाद्वृद्धिमुपगतस्य क्षीरस्य क्वाथे पुरतो ममैव क्षयो युक्त इति मत्वेव वारिणा क्षीयते । तदिदमसाम्प्रतमाचरितम् । गृहाण साधुजनोचितमध्वानम् । साधवो हि दिङ्मोहादुत्पथप्रवृत्ता अपि पुनर्गृहीतसत्पथा भवन्ति । इत्यादि वदति तस्मिन् मकरन्दे प्रियसखे, कथमपि स्मरशरप्रहारपरवशः कन्दर्पकेतुः परिमिताक्षरमुवाच । वयस्य! दितिरिव शतमन्युसमाकुला भवत्यस्मादृशजनचि-

मिलता मैत्र्या उपगतस्य, मत्सङ्गमात् मत्सम्बन्धात् वृद्धिं अभिवृद्धिं उपगतस्य प्राप्तस्य, क्षीरस्य दुग्धस्य क्वाथे सन्तापे सति, पुरतः पुरस्तात् ममैव क्षयः हानिः युक्त न्याय्य इति मत्वेव गणयित्वेव, वारिणा जलेन क्षीयते । 'क्षि क्षये'। तत् तस्मात् असाम्प्रत अयुक्त आचरित अनुष्ठित । साधुजनाना उचित अर्हं, अध्वान मार्गं, गृहाण आश्रय । साधवः, दिङ्मोहात् दिग्भ्रमात् उत्पथप्रवृत्ता अपि अमार्गप्रस्थिता अपि, गृहीतः आदृतः सत्पथः सन्मार्गः यैस्ते तादृशाः भवन्ति । प्रियसखे प्रियसुहृदि तस्मिन् मकरन्दे, इत्यादि वदति सति कथयति सति, स्मरशराणां मान्मथवाणाना प्रहारेण ताडनेन, परवश अस्वतन्त्रः, कन्दर्पकेतुः परिमितानि यावदपेक्षितानि अक्षराणि यस्मिन् कर्मणि तद्यथा तथा, उवाच उक्तवान् । **वयस्येत्यादि** ॥ वयस्य मित्र, अस्मादृशजनाना चित्तवृत्तिः, दितिः असुरमाता सेव, शतमन्युभिः अनेकैश्शोकैः समाकुला व्यग्रा । (पक्षे) शतमन्युः स्वसपत्नीपुत्रः इन्द्र । अथ, उपदेशस्य कर्तव्यविषयावबोधस्य, पच्यन्त इव क्वथ्यन्त इव, उन्मूल्यन्ते समूलमुच्छिद्यन्ते ।

त्तवृत्तिः । नायमुपदेशकालः, पच्यन्त इव मे अङ्गानि, क्वाथ्यन्त इवेन्द्रियाणि, निस्सरन्तीव प्राणाः, उन्मूल्यन्त इव विवेकाः, नष्टेव स्मृतिः, अधुना तदलमनया कथया, यदि त्वं सहपांसुक्रीडासमसुखदुःखोऽसि तन्मया सममागम्यतामित्युक्त्वा परिजनालक्षित एव तेन सहैव पुरान्निर्जगाम । ततोऽनेकनल्वशतमात्रमध्वानं गत्वा तेनागस्त्यवचनसंहृतब्रह्माण्डखण्डगतशिखरसहस्रः कन्दरान्तरलतागृहप्रसुप्तविद्याधरमिथुनगीताकर्णनसुखितचमरीगणमारणोत्सुकशबरकुलसम्बाधकच्छतटः, कटकतटगतकरिकराकृष्टभग्नस्यन्दमानह-

---

अनया कथया अलं । एषा कथा मास्तु । पासुक्रीडा रथ्यासु धूलिकेलिः । अनालक्षितः अदृष्ट एव । तत इति ॥ 'नल्वः किष्कुचतुश्शतम्' इत्यमर. । नल्वानां शतानि नल्वशतानि अनेकानि नल्वशतानि, मात्रा गन्तव्यदेशेयत्ता यस्मिंस्त, तादृश अध्वानं मार्गं, गत्वा अतीत्य, अगस्त्यस्य तन्नाम्नो महर्षेः वचनेन संहृतानि संक्षिप्तानि ब्रह्माण्डखण्डगतानि उच्चैष्ट्वेन ब्रह्माण्डव्यापीनि शिखरसहस्राणि असङ्ख्यश्शृङ्गाणि यस्य सः। कन्दराणां गुहानां अन्तरे मध्ये विद्यमानेषु लतागृहेषु लतामण्टपेषु प्रसुप्तानां सुख निद्राणानां विद्याधरमिथुनानां विद्याधरद्वन्द्वानां गीतस्य गानस्य आकर्णनेन श्रवणेन सुखितानां सञ्जातसुखानां चमरीणां गणस्य समूहस्य मारणे हनने उत्सुकस्य शबरकुलस्य व्याधवर्गस्य सबाधः यत्र तादृशं कच्छतट अनूपप्रदेशः यस्मिन् सः तादृशः, कटकतट नितम्बप्रदेश गतानां प्राप्तानां करिणां गजानां करैः शुण्डादण्डैः आकृष्टानां, भग्नानां दलिताना, स्यन्दमानानां रसस्राविण्यं हरि-

रिचन्दनरसामोदगन्धवाहिगन्धवाहशिशिरितशिलातलः, सुदूरपतनभग्नतालफलरसार्द्रकरतलास्वादनोत्सुकशाखामृगकदम्बकः, प्रलम्बमाननिर्झरोपान्तनिविष्टजीवञ्जीवकमिथुनलिह्यमानविविधफलरसामोदगन्धसुरभितपरिसरः, सरभसकेसरिसहस्रखरनखरधाराविदारितमत्तमातङ्गकुम्भस्थलविगलितस्थूलमुक्ताफलशबलशिखरतया शिखरावलग्नं तारागणमिवोद्वहन्, सुग्रीव इव ऋक्षगवयशरभकेसरिकुमुदपनसमैन्द-

---

चन्दनानां रसस्य द्रवस्य आमोदगन्धः सौरभं वहन्ति तच्छीलास्तेनेति वाहिनः तादृशः यः गन्धवाहः वायुः तेन शिशिरितं शीतलतामापादितं शिलातलं यस्य सः । सुदूरपतनेन अतिदूरदेशपतनेन भग्नस्य दलितस्य तालफलस्य रसेन आर्द्रं क्लिन्नं यत् करतलं तस्य आस्वादने उत्सुकं उत्कं शाखामृगाणां वानराणां कदम्बकं समूहः यस्य सः, प्रलम्बमानानां ऊर्ध्वदेशादधःपततां निर्झराणां गिरिनदीप्रवाहाणां उपान्तेषु समीपदेशेषु निविष्टैः उपविष्टैः जीवजीवकमिथुनैः चकोरद्वन्द्वैः लिह्यमानानां आस्वाद्यमानानां फलानां रसामोदगन्धेन रससौरभेण सुरभितः सञ्जातसौरभः परिसरः समीपदेशः यस्य सः, सरभसानां ससंरम्भाणां केसरिणां सिंहानां सहस्रस्य खरनखरधाराभिः कठिननखकोटिभिः विदारितेभ्यः दलितेभ्यः मत्तमातङ्गकुम्भस्थलेभ्यः समदगजमस्तकेभ्यः विगलितैः स्थूलमुक्ताफलैः पृथुलमौक्तिकैः शबलं मिश्रं शिखरं अग्रं यस्य तस्य भावः शिखरता तया, शिखरावलग्नं शृङ्गदेशसम्बद्धं तारागणं नक्षत्रसमूहं, उद्वहन्निव बिभ्राण इव, सुग्रीवः तन्नामा वानरराज इव, ऋक्षाः भल्लुकाः, गवयाः गोसदृशाः मृगविशेषाः, शरभाः सिंहघातुकाः अष्टपादाः मृगविशेषाः

मानपादच्छायः, पशुपतिरिव नागनिश्वाससमुत्क्षिप्तभूतिः, जनार्दन इव विकचवनमालः, सहस्रकिरण इव सप्तपत्रस्यन्दनोपेतः, विरूपाक्ष इव सन्निहितगुहः शिवानुगतश्च, कामीव कान्तारोषरसानुगतः समदनश्च, श्रीपर्वत इव सन्निहितमल्लि-

केसरिणः सिंहाः कुमुदानि कैरवाणि पनसाः कण्टकिफलद्रुमाः तैः सेव्यमाना आश्रीयमाणा पादानां प्रत्यन्तपर्वतानां सम्बन्धिनी छाया अनातपप्रदेशः यस्य सः, (पक्षे) ऋक्षादयो वानराः, पादच्छाया चरणकान्तिः। पशुपतिः रुद्रः स इव, नागानां गजानां निश्वासैः समुत्क्षिप्ता भूतिः गैरिकधातुधूलिः यस्मिन् स, (पक्षे) नागानां भूषणभूतानां सर्पाणां निश्वासेन समुत्क्षिप्ता सम्यगुद्धूता भूतिः भस्म यस्य सः । जनार्दनः श्रीविष्णुः स इव, विकचा वनानां काननानां माला परम्परा यस्य सः। (पक्षे) विकस्वरवनजपुष्पमाल, सहस्रकिरणः सूर्यः स इव, सप्तपत्रैः सप्तच्छदैः स्यन्दनैः तिनिशवृक्षैश्च उपेतः सहितः (पक्षे) सप्त सप्तत्वसङ्ख्याविशिष्टानि पत्राणि वाहनानि यस्य सः तादृशेन स्यन्दनेन रथेन उपेतः । यद्वा सप्त सप्तेत्याख्यातः पत्रं हयः यस्य तादृशेन स्यन्दनेनोपेतः। "सप्त युञ्जन्ति रथमेकचक्रं । एको अश्वो वहति सप्तनाम" इति श्रुतिवचनमत्र प्रमाणम् । विरूपाक्षः रुद्रः स इव, सन्निहिताः सन्निकृष्टा गुहाः कन्दराः यस्मिन् सः, शिवा हरीतकी 'हरीतकी हैमवती रेचकी श्रेयसी शिवा ।' इति कोशः । तया अनुगतः आक्रान्तः । (पक्षे) गुहः सुब्रह्मण्यः, शिवा पार्वती । कामी कामुकः स इव कान्तारैः ऊपरदेशैश्च युक्तेन सानुना प्रस्थदेशेन अनुगतः, समदनश्च कपित्थवृक्षयुक्तश्च (पक्षे) कान्तायाः रोषरसेनानुगतः, समन्मथश्च। श्रीपर्वतः तदाख्यः कश्चन तपस्सिद्धिक्षेत्रभूतः पर्वतः स इव, सन्निहितः सान्निध्यं कुर्वाणः मल्लिकार्जुनः तन्नामा महेश्वरः

कार्जुनः, नरवाहनदत्त इव प्रियंगुश्यामासनाथः, शिशुरिव कृतधात्रीधृतिः, वासरारम्भ इवारुणप्रभापाटलितपत्रवनराजिः, कृष्णपक्ष इव बहुलतागहनः, कर्ण इवानुभूतशतकोटिदानः, भीष्म इव शिखण्डिमुक्तैरर्धचन्द्रैराचिततनुः, कामसूत्रविन्यास इव मल्लनागघटितकान्तारसामोदः, हिरण्य-

यस्मिन् सः। (पक्षे) मल्लिका विचिकिला अर्जुना ककुभवृक्षा यस्मिन् सः। नरवाहनदत्त राजविशेषः स इव, प्रियङ्गुश्यामा नरवाहनदत्तमहिषी तया सनाथः (पक्षे) प्रियङ्गु फलिनी श्यामा धान्यविशेषः। शिशुरिव अर्भक इव, कृता धात्र्या स्तनपायिकया उपमात्रा धृतिः धारणं यस्य, (पक्षे) धात्र्यः आमलकीवृक्षाः। भूमिर्वा। वासरारम्भः दिनोपक्रमः स इव अरुणस्य सूर्यसारथेरनूरोः, प्रभया कान्त्या पाटलितं पत्रं पर्णं वनं जलं तस्य राजिः पङ्क्तिश्च यस्मिन् स तथा (पक्षे) अरुणप्रभा रक्तवर्णं, पत्रं दलं वनराजिः काननवीथी। कृष्णपक्षः अन्धपक्ष इव, बहुलता बहुलत्वं कृष्णपक्षत्वं तया गहनो निबिडः (पक्षे) बहीभिः लताभिः वीरुद्भिः गहनः दुष्प्रवेशः। कर्णः राधेयः स इव, अनुभूतं शतकोटीनां प्रकृष्टसङ्ख्यायुक्तधनानां दानं येन सः। (पक्षे) शतकोटिः वज्रं तेन दानं खण्डनं अनुभूतं येन सः। भीष्म इव देवव्रत इव, शिखण्डिभिः मयूरैः मुक्तैः त्यक्तैः, अर्धचन्द्रैः पिञ्छभारैः आचिता व्याप्ता तनुः यस्य सः। (पक्षे) शिखण्डी द्रुपदपुत्रः, तेन मुक्तैः त्यक्तैः अर्धचन्द्रैः सञ्ज्ञाख्यबाणविशेषैः, आचिता व्याप्ता तनुः यस्य सः, कामसूत्रं कामशास्त्रं तस्य विन्यास इव, मल्लनागः कामशास्त्रप्रणेता मुनिः तेन घटिताः कान्ता दयिता तस्या रसाः शृङ्गारादयः तैः आसमन्तात् मोदो हर्षः यस्य स तथा। (पक्षे) मल्लनागो गन्धहस्ती तेन घटितं यत्कान्तारं वनं तेन सा-

कशिपुरिव शम्बरकुलाश्रयः, गैरिकव्याजादुपरि रविरथमार्गमार्गणार्थमिवारुणेनोपास्यमानः, शिखरगतसूर्याचन्द्रमस्तया विस्तारितलोचनोऽगस्त्यमार्गमिवोद्वीक्षमाणः, कुलिशक्षतरन्ध्रस्रस्तान्त्रनाळ इव जरदजगरभोगैः, कुम्भकर्ण इव दन्तान्तराळगतैः वानरव्यूहैः, पिण्डालक्तकरक्तपदपङ्क्तिसूचितसंचा-

---

मोदः मदगन्धसहितः । हिरण्यकशिपुरिव प्रह्लादपितेव, शम्बरस्य तदाख्यस्यासुरस्य यत्कुल वश तस्याश्रयः (पक्षे) शम्बराः हरिणाः "वातप्रमीशम्बरकृष्णसाराः" इति कोशः । तेषा कुल समूहः । गिरौ भवाः गैरिकाः धातवः तेषां व्याजात्, उपरि ऊर्ध्वदेशे, रविरथस्य सूर्यस्यन्दनस्य मार्गः गमनयोग्यः पन्थाः तस्य मार्गणार्थं अन्वेषणार्थं, अरुणेन अनूरुणा, उपास्यमान इव, सेव्यमान इव, शिखर शृङ्गं तद्गतौ सूर्याचन्द्रमसौ यस्य स., तस्य भावः सूर्याचन्द्रमस्ता तया सू......या । विस्तारिते सम्यक् प्रसारिते लोचने येन स. तादृशस्सन्, अगस्त्यस्य मार्गं आगमनसरणि उद्वीक्षमाण इव पश्यन्निव । जरतां जीर्णानां अजगराणा तिलित्साना भोगै शरीरैः, कुलिशक्षतेन वज्रघातेन जातात् रन्ध्रात् स्रस्तानि बहिर्निर्गतानि आन्त्रनाळानि सिराजालानि यस्य सः, दन्तानां उन्नतपाषाणानां (अन्यत्र) दन्ताना दशनानां अन्तराल मध्य तद्गतैः, वानरव्यूहैः शाखामृगसमूहैः, कुम्भकर्ण इव, पिण्डालक्तकेन यावकरसेन रक्तया अरुणया पदपङ्क्त्या चरणविन्यासश्रेण्या सूचित दर्शितः सञ्चारः गमनागमन यासां ताः तादृश्यः याः शचीपतिवारविलासिन्य. इन्द्रगणिकाः उर्वश्यादयः तासां सङ्केतभूतानि दयितसमागमस्थलीभूतानि केतकीमण्टपानि यस्मिन स. । अकुलीनोऽपि निहीनकुलप्रसूतोऽपि सद्वंशभूषितः इति विरोधः ।

रशचीपतिवारविलासिनीसङ्केतकेतकीमण्टपः, अकुलीनोऽपि सद्वंशभूषितः, दर्शिताभयोऽपि मृत्युफलदायी, सप्रस्थोऽप्यपरिमाणः, सनादोऽपि निश्शब्दः, भीमोऽपि कीचकसुहृत्, पिहिताम्बरोऽपि विलसदंशुकः, विन्ध्यो नाम गिरिरदृश्यत ॥ यश्च प्रवृद्धगुल्मतया रोगीव दृश्यमान-

---

परिहारंस्तु, कु. पृथ्वी तत्र लीनः मग्नः कुलीनः स न भवतीति अकुलीन. उन्नत इत्यर्थः। सद्भिः श्रेष्ठैः वंशैः वेणुभिः भूषितः अलङ्कृतः । दर्शित अभयं येन तादृशोऽपि, मृत्युफल मरणफल तद्दातीति विरोधः । (पक्षे) अभया हरीतकी। मृत्युफल किंपाकफल । प्रस्थो मानविशेषः तत्सहितोऽपि अपरिमाणः परिमाणागोचर इति विरोध । (पक्षे) प्रस्थ सानु. अपरिमाणः अतुल्यरूपः। सनादोऽपि सशब्दोऽपि निश्शब्द शब्दरहितः । (पक्षे) नदाः प्रत्यक्स्रोतसो नद्यः तेषां समूहः नादः तेन सहित । निर् निर्गतः शब्दः ध्वनिः यस्मात् सः उत्थितध्वनिरित्यर्थ । भीमोऽपि वृकोदरोऽपि कीचकसुहृदिति विरोध. । कीचकहन्तु कीचकसुहृत्त्व विरुद्धम्। (पक्षे) भीमः भयङ्करः। वेणवः अन्तस्सुषिरा वंशस्तम्बविशेषाः तेषां रक्षकः । पिहिताम्बरः छन्नवस्त्रोऽपि विलसन्ति प्रकाशमानानि अंशुकानि वस्त्राणि यस्य सः इति विरोधः । (पक्षे) पिहित निजौन्नत्येनाच्छादित अम्बर आकाश येन सः। विलसन्त. भासमाना अंशवः किरणाः यस्य सः । एवभूतो विन्ध्योनाम गिरि. पर्वत. अदृश्यत । **यश्चेति** ॥ प्रवृद्ध गुल्म उदरशूलरोगः यस्य स. तस्य भाव. प्रवृद्धगुल्मता तया हेतुना, (पक्षे) गुल्मः लतासञ्चयविशेषः । रोगीव आतुर इव, दृश्यमानः बहूनां धातूनां मांसरुधिरादीनां वातपित्तादीना वा,

बहुधातुविकारः । यश्च साधुरिव सानुग्रहप्रचार-प्रकटितमहिमा, मीमांसान्याय इव पिहितादिगम्बरदर्शनः । यश्च हरिवंशैरिव पुष्कराक्षप्रादुर्भावरमणीयैः, राशिभिरिव मीनमकरकुळीरमिथुनसङ्गतैः, करणैरिव शकुनिनागभद्रबालवकुलोपेतैः देवखातैरुपशोभितान्तः । यश्च कुसुमविचित्राभिः वंशपत्रपतिताभिः सुकुमारललिताभिः पुष्पिताग्राभिः

---

(पक्षे) गैरिकधातुना विकार यस्य स । **यश्चेति** ॥ हरिवशाः व्यास-प्रोक्ता कृष्णकथाविशेषाः तैरिव, पुष्कराक्षः पुण्डरीकाक्षः श्रीवासुदेवः तस्य प्रादुर्भावेन उत्पत्त्या रमणीयैः मनोज्ञैः, (पक्षे) पुष्कराक्ष पद्मबीज । राशयः मेषादय ग्रहावासस्थानानि तैरिव, मीन, मकर, कुळीर, मिथुनाः, राशिविशेषाः तै. सङ्गतै. सहितैः । (पक्षे) मिथुनभूता मीनमकराः मत्स्यविशेषा कुळीरा कर्कटाश्च । करणैः ज्योतिश्शास्त्रप्रसिद्धैर्भवादिकरणैरिव, शकुनिनागभद्रबालवाः करणविशेषा तेषा कुलेन समूहेन उपेतै (पक्षे) शकुनिः पक्षी, नागा सर्पाः भद्रवाला खञ्जरीटाः अथवा भद्राः मुस्ता बाल ह्रीवेर, (ववयोरभेद ) वकुल केसर एतैरुपेतै । देवखातैः अपौरुषेयै. सरोभि, उपशोभित भासमानः अन्तः समीपदेशः यस्य स । **यश्च कुसुमेति** ॥ यः पर्वत, कुसुमविचित्राप्रभृतयः शिखरिण्यन्ताः वृत्तसंज्ञाविशेषा । (पक्षे) कुसुमैः पुष्पै. विचित्राभिः, वंशानां वेणूनां पत्रेषु दलेषु पतिताभि पतनशीलाभि, सुकुमारा मृदुला ललिता मनोज्ञाश्च ताभि, पुष्पितानि सञ्जातपुष्पाणि अग्राणि शिखरभागा. यासा ताभि, प्रहर्षिणीभिः हर्षोत्पादिकाभि, शिखर अग्र तद्वतीभि, लताभिः, दर्शित अनेकवृत्तानां विलास येन. सः ।

प्रहर्षिणीभिः शिखरिणीभिः लताभिः दर्शितानेकवृत्तविलासः। यश्च समदकलहंससारसरसितोद्भ्रान्तोत्कुटविकटकुञ्जकञ्छव्याधूतकमलषण्डगलितमकरन्दबिन्दुसन्दोहसुरभितसलिलया सायन्तनसमयमज्जत्पुलिन्दराजसुन्दरीनिम्ननाभिमण्डलपरिपीतसलिलया तटनिकटस्थितविकटमत्तमातङ्गगण्डस्थलविगलन्मदधाराबिन्दुप्रकरस्तबकितसलिलया तीरप्ररूढकेतकीकाननपतितधूलीनिकुरुम्बसञ्जातसैकतसुखोपविष्टतरुणमु-

---

**यश्च समदेति।** समदाना मदसहितानां कलहंसानां कादम्बानां सारसाः जलशकुन्तविशेषाः तेषां च रसितेन शब्देन उद्भ्रान्तानां अनवस्थितानां उत्कुटानां मत्स्यविशेषाणां विकटया विशालया पुच्छच्छटया व्याधूतेभ्यः कम्पितेभ्यः कमलषण्डेभ्यः तामरसकदम्बकेभ्यः गलितानां मकरन्दबिन्दूनां सन्दोहेन सुरभितं सौरभं आपादितं सलिलं यस्यास्सा तया। सायन्तनसमये सायङ्काले मज्जन्तीनां स्नान्तीनां पुलिन्दराजसुन्दरीणां किरातानां निम्नैः गभीरैः नाभिमण्डलैः परिपीतं गृहीतं सलिलं यस्यास्सा तया, मदेन मुखरं सशब्दं यत् राजहंसानां कुलं समूहः तस्य कोलाहलेन मुखरितं शब्दायमानं कूलपुलिनं रोधस्सैकतं यस्यास्सा तया, तटनिकटे कूलोपकण्ठे विद्यमानानां मत्ताः समदाः ये मातङ्गाः गजाः तेषां गण्डस्थलेभ्यः विगलन्त्याः मधुधारायाः बिन्दुप्रकरैः बिन्दुसमूहैः स्तबकितं सञ्जातस्तबकं सलिलं यस्यास्सा तया, तीरे कूले प्ररूढानां केतकीनां काननात् अरण्यात् पतितेन धूलीनिकुरुम्बेण परागसमूहेन सञ्जाते सैकते पुलिनप्रदेशे सुखोपविष्टानि जोषमासीनानि यानि तरुणानि यौवनवन्ति सुरमिथुनानि देवताद्वन्द्वानि तेषां निधुवनलीला सुरतक्रीडा तत्सम्बन्धी यः परि-

रमिथुननिधुवनलीलापरिमळसाक्षिकूलोपवनया तटावटस्थविघटिताम्भोजषण्डमण्डपावस्थितजलदेवताविगाह्यमानपयसा, तीरप्ररूढवेतसवनाभ्यन्तरनिलीनदात्यूहमदोत्कटकेलिकुहकुहारावकौतुकाकृष्टसुरमिथुनसंस्तूयमानोपभोगया उपकूलसंजातनळिनपुञ्जकुञ्जपुञ्जितकुक्कुटघटाघूत्कारभैरवतीरया, आतपसेवासमुत्सुकजलमानुषीमृदितसुकुमारतरपुळिनया उपवनपव-

---

मळः अनुभूयमानस्रक्चन्दनादिसौरभ तस्य साक्षि कूलोपवनं यस्यास्सा तया, तटावटः तीरगर्त. तत्रस्थ यत् विघटिताम्भोजषण्डं विकसिततामरसकदम्बक तद्रूपे मण्टपे अवस्थिताभिः जलदेवताभि. विगाह्यमानं स्नानार्थं प्रविश्यमान पय यस्यास्सा तया, तीरे कूलदेशे प्ररूढाना वेतसाना वानीराणां वनस्य अभ्यन्तरे मध्ये निलीनानां उपविष्टानां दात्यूहाना कालकण्टकाना, मदोत्कटः मदोद्रिक्तः केळ्या लीलया कृतः यः कुहकुहाराव कुहकुहध्वनिः तत्र कौतुकेन आकृष्टैः समीपमासादितैः सुरमिथुनैः देवताद्वन्द्वैः सस्तूयमानः प्रशस्यमानः उपवनोपभोगः आरामानुभवः यस्यास्सा । उपवनाभोग इत्यपि पाठः । अर्थस्तु उपवनसम्बन्धी आभोग. विस्तार. यस्यास्सा तया । कूलस्य समीप उपकूल तत्र सञ्जात य नळिनपुञ्जकुञ्जः पद्मषण्डालकृतलतामण्टपः तत्र पुञ्जितानां सङ्घीभूतानां कुक्कुटघटाना जलकुक्कुटसमूहानां घूत्कारेण भैरव भयङ्कर तीर कूलदेशः यस्यास्सा तया, आतपसेवायै समुत्सुकाभि. सोत्कण्ठाभिः जलमानुषीभि. मृदितं उपवेशनादिना सम्मर्दित सुकुमारतर अतिमृदुल पुळिन यस्याः सा तया उपवनपवनेन आन्दोळिताः क्षोभिताः तरळतराः अतिचञ्चलाः तरङ्गाः यस्यास्सा तया, नलिनीपुञ्जे पद्मिनीषण्डे उपविष्टानां बकोटकानां बकानां

नान्दोलिततरलतरतरङ्गया, नलिनीनिकुञ्जपुञ्जनिविष्टब-कोटककुटुम्बिनीनिरीक्ष्यमाणवृद्धशफरया, पोताधानलुब्ध-कोयष्टिकस्कम्भनभीमवेतसवनमालया, तरङ्गमालासन्तरदु-द्दण्डवालदर्शनधावदतिचपलराजिलराजिराजितोपकूलसलि-लया, खञ्जरीटमिथुननिधुवनदर्शनोपजातनिधिग्रहणकौतुक-किरातखन्यमानस्थपुटिततीरया, क्रुद्धयेव दर्शितमुखभङ्गया, मत्तयेव स्खलद्गत्या, दिनारम्भलक्ष्म्येव वर्धमानवेलया भा-

---

कुटुम्बिन्यः स्त्रियः ताभिः निरीक्ष्यमाणाः भक्ष्याशया ग्रहणार्थं विलोक्यमाना. वृद्धा. पृथुला. जरन्तोवा शफराः मीनाः यस्यां सा तया । पोताधान मत्स्य-सङ्घात तत्र लुब्धाना सतृष्णाना कोयष्टिकानां तदाख्यजलपक्षिविशेषाणां, स्कम्भनेन शब्दविशेषेण भीमा भयावहा वेतसवनमाला वानीरद्रुमवनवाटी-यस्यास्सा तया, तरङ्गमालासु ऊर्मिपरपरासु सन्तरनां प्लवमानाना उद्दण्ड-वालानां मत्स्यविशेषाणां दर्शनेन धावतां अतिचपलाना अतिचटुलाना राजिलानां डुण्डुभाना राज्या समूहेन राजित भासमान उपकूलसलिल तीर-समीपदेशजल यस्यास्सा तया । खञ्जरीटाना खञ्जनाना मिथुनस्य द्वन्द्वस्य यन्निधुवनं सङ्गम तस्य दर्शनेन सञ्जात निधिग्रहणकौतुक येषा ते तादृशैः किरातै पुलिन्दै. खन्यमान अवदार्यमाण अत एव स्थपुटित उन्नतानत-भावमासादितं तीर कूल यस्यास्सा तया । क्रुद्धयेव रुष्टयेव, दर्शितः मुख-भङ्गः मुखविकार. यया सा (पक्षे) मुखभङ्गः मुखतरङ्गः । मत्तयेव मदस-हितयेव, स्खलन्ती गतिः यस्यास्सा तया । (पक्षे) गतिः नदीरयः । दि-नारम्भलक्ष्म्येव प्रत्यूषशोभयेव, वर्धमाना वेला कालः यस्यां सा तया (पक्षे) वेला मर्यादाभूमि. । 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि ।' इति अमरः ।

रतसमरभूम्येव नृत्यत्कबन्धया, प्रावृषेव विजृम्भमाणशत-
पत्रपिहितविषधरया, सकामयेव कृतभूभृत्सेवया, रेवया
प्रियतमयेव प्रसारिततरङ्गहस्तयोपगूढः । यश्च हरिखरनख-
रविदारितकुम्भस्थलविकलवारणध्वानैरद्यापि कुम्भसम्भवं
समाह्वयतीवोच्चतालभुजः । तत्रान्तरे मकरन्दस्तमुवाच ।
पश्योदञ्चदवाञ्चदञ्चितवपुःपूर्वार्धपश्चार्धभाक् स्तब्धोत्तानि-

---

भारतानां भरतवश्यानां राज्ञा समरभूम्येव युद्धभूम्येव। नृत्यन्ति स्फुरन्ति कबन्धानि अपमूर्धकलेबराणि (पक्षे) कवन्ध जल। 'कबन्धमुदक पाथ' इत्यमरः। प्रावृषेव वर्षासमयेनेव, जृम्भमाणै वर्धमानै शतपत्रै मयूरैः पिहिता मयूरभक्षणभयादिनस्तत छन्नाः विषधरा सर्पाः यस्या सा तया (पक्षे) शतपत्राणि तामरसानि। विषधरा जलधरा तटाकादय। कामेन धनाभिलाषेण सह वर्तते इति सकामा तयेव, कृता भूभृत राज्ञ सेवा यया सा (पक्षे) भूभृतः पर्वतस्य। प्रियतमयेव प्राणवल्लभयेव प्रसारितः विस्तारित तरङ्गहस्त ऊर्मिरूप करः यया सा तया। रेवया नर्मदया उप-गूढ आश्लिष्ट ॥ **यश्च हरिनखरेत्यादि**। य. पर्वत, उच्चाः उन्नता. ताला एव भुजाः यस्य तादृशस्सन्। हरीणा सिंहानां खरनखैः. क्रूरनखैः विदा-रितैः दलितैः कुम्भस्थलै मस्तकप्रदेशै विकलाना वैकल्य प्राप्ताना वारणाना गजानां ध्वानैः शब्दैः, अद्यापि, कुम्भसम्भव अगस्त्य, समाह्वयतीव आ-कारयतीव ॥ **तत्रेति**। तत्रान्तरे तन्मध्ये, मकरन्द, त कन्दर्पकेतु, उवाच वक्ष्यमाणप्रकारेणेति शेषः। **पश्येति** ॥ उदञ्चत् ऊर्ध्व उन्नमत् अवाञ्चत् अधो गच्छत् अञ्चित (विक्रमाश्रयणेन) प्रशस्त वपुषः शरीरस्य पूर्वार्धपश्चार्ध भजतीति भाक्, स्तब्धे निश्चले उत्तानिते उत्क्षिप्ते पृष्ठे पश्चाद्भागे निष्ठितं

तपृष्ठनिष्ठितमनाग्भुग्नाग्रलांगूलभृत् । दंष्ट्राकोटिविशङ्कटास्यकुहरः कुर्वन् सटामुत्कटामुत्कण्ठः कुरुते क्रमं करिपतौ क्रूराकृतिः केसरी ॥ अपि च । उत्कर्णोऽयमकाण्डचण्डिमपटुस्स्फारस्फुरत्केसरः क्रूराकारकराळवक्त्रकुहरः स्तब्धोर्ध्वलांगूलभृत्। चित्रे चापि न शक्यते विलिखितुं सर्वाङ्गसङ्कोचभाक् फीट्कुर्वद्गिरिकुञ्जकुञ्जरबृहत्कुम्भस्थलस्थो हरिः ॥

---

स्थित मनाक् किञ्चित् भुग्न कुटिल अग्रलागूल वालाग्र विभर्तीति भृत् । दंष्ट्राकोटिभिः दीर्घकुटिलदन्ताग्रैः विशङ्कट विशाल आस्यकुहर वदनरन्ध्र यस्य स तादृश , सटा स्कन्धरोमाणि, उत्कटा उत्फुल्लां, कुर्वन् तन्वन , उत्कर्णः उत्तानितश्रवणपुटश्च, क्रूरा नृशसा आकृति आकार यस्य तादृशश्च सन् । अय केसरी सिह , करिपतौ गजेन्द्रे, क्रम आक्रमण बलात्तदुपरिनिपतनसरम्भ, कुरुते तनोति । **शार्दूलविक्रीडितं वृत्तम्** । **स्वभावोक्तिरलंकारः** ॥

एव क्रममाण सिह वर्णयित्वा सम्प्रति क्रान्तगज तमेव वर्णयितुमारभते । **उत्कर्ण इत्यादिना** ॥ उत्कर्ण ऊर्ध्वमुत्क्षिप्तश्रवणपुट अकाण्डे असमये अस्थाने वा समुत्पन्नः यः चण्डिमा तेन पटु , स्फार अमित यथा तथा स्फुरन्तः दीप्यमानाः केसराः स्कन्धरोमाणि यस्य स , क्रूराकार घातुकस्वरूप कराळ विकृत च यत् वक्त्र वदनं तेन विकट भयङ्कर , स्तब्ध निश्चल यदूर्ध्वलागूल उपरिप्रसारितो वाल तद्बिभर्तीति भृत्, चीत्कुर्वतः कुम्भस्थलविदारणव्यथाऽसहनेन चीत्कारध्वनि कुर्वन गिरिकुञ्जकुञ्जरस्य आरण्यकद्विपस्य बृहति पृथुले कुम्भस्थले शिरस्तटे तिष्ठतीति तादृश , अय हरि सिहः, सर्वाङ्गसङ्कोच निखिलावयवसङ्कोचन

अनन्तरं नीचदेशनयेव न्यग्रोधोपचितया उत्तरगोग्रहणभूम्येव विजृम्भमाणबृहन्नळया कुरुदेशढक्कयेव घनसारसार्थवाहिन्या विदग्धमधुगोष्ठ्येव नानाविटपीतासवया नलकू-

भजतीति भाक् तादृशः, अत एव, चित्रेणापि, अभिलिखितु, न शक्यते न पार्यते । विक्रमैकरसत्वप्रख्यापकस्य सर्वाङ्गसङ्कोचस्य चित्रे विलिख्य सन्दर्शन दुर्घटमिति भाव । अस्मिन् पद्ये, कुञ्जरशिर.कुम्भेत्यपि क्वचित्पाठो दृश्यते । तत्तु पौनरुक्त्यदोषग्रहिलत्वात् नादरणीयमभिज्ञै । **शार्दूलविक्रीडितं वृत्तम्** । **स्वभावोक्तिरलंकारः** ॥ 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्' इति लक्षणात् ।

**अनन्तरमित्यादि** ॥ नीचदेशः निम्नदेशः तद्गतनयेव, न्यक् अधो निर्लीन रोधः कूल तेन पचितया कृशया, पक्षे, न्यग्रोधैः वटवृक्षैः उपचितया समृद्धया, उत्तरगोग्रहणभूमिः दुर्योधनादिभिरपहृताः विराटगवीरुद्दिश्य तैस्सहार्जुनस्य युद्धाचरणस्थल तयेव, विजृम्भमाणा पराक्रमेण वर्धमाना बृहन्नळा तादृशवेषधारी अर्जुनः यस्यां तया, (पक्षे) बृहन्ति नळानि तृणविशेषाः यस्यां, कुरुदेशः कुरुक्षेत्र तत्रस्थया ढक्कयेव कुल्ययेव 'ढक्का हिमाभ्रकुल्या च' इति कोश । घनसारा कर्पूरा तेषां सार्थं सङ्घं वहतीति तया । 'मरुदेशढक्कया' इत्यपि पाठः । तदा मरुदेशे निर्जलप्रदेशे ढक्का यात्रा तयेव, घनस्य मेघस्य सारः जलं त प्रति सार्थान् सङ्घीभूय गच्छतो वणिक्सङ्घान् वाहयति प्रापयतीति तया, मरुदेशयात्रापराः पिपासया जलमन्विष्य सङ्घशो गच्छेयुरित्येतदनुभवसिद्धम् । (पक्षे) घनसाराः पुष्पफलहीनाः करवीरसमानाकारपत्रा ह्रस्वाः वृक्षविशेषाः, तेषां सार्थं सङ्घं वहतीति वाहिनी तया । 'घनसारस्तु कर्पूरे वृक्षभेदे जलेऽपि च' इति कोशः । विदग्धानां विलासिनां मधुगोष्ठ्येव पानगोष्ठ्येव, नानाविटैः

बरचित्तवृत्येव सततधृतरम्भया, मत्तमातङ्गगत्येव घण्टारवावेदितमार्गया, सदीश्वरसेवयेव दूरोद्गतबहुफलया, विराटलक्ष्म्येवानन्दितकीचकशतया, विन्ध्याटव्या, कतिपयदूरमध्वानं गत्वा, कामिन इव मदनशलाकाङ्कितस्य, विकर्तन-

---

अनेकविटैः पीतः आसवः यस्यां सा तया, पक्षे, विटपिन. वृक्षाः तैः इतः प्राप्त आसवः पुष्परसः यस्यां सा तया । नलकूबरः कुबेरपुत्रः तस्य मनोवृत्ति चित्तस्थितिः तयेव, सततं अनवरत धृता रम्भा तन्नाम्नी देववारवनिता यया सा, पक्षे, रम्भाः काननकदल्यः। मत्तमातङ्गस्य गन्धगजस्य गत्येव, घण्टायाः रवेण नादेन आवेदितः पुरोयायिनां ज्ञापितः मार्गः यस्यां सा तया। (पक्षे) घण्टारवा ओषधिविशेष , चणपुष्पिकेति प्रसिद्धा । तया आ ईषत् बोधितः मार्गः मृगसमूहः यस्यां सा, सदीश्वरस्य सत्प्रभोः सेवा परिचरणं तयेव, दूर उद्गतानि अत्यभिवृद्धानि बहूनि फलानि प्रयोजनानि यस्या तया, पक्षे, दूरोद्गताः अत्युच्छ्रिताः बहुफला तदाख्याः वृक्षविशेषाः यस्यां तया । अदूरोद्गतफलयेत्यपि पाठ । तदा अदूरोद्गतानि झटिति उद्भूतानि बहूनि फलानि धनवसनानिष्टनिवारणादीनि यया । पक्षे, अदूरं सन्निहितशाखाग्रभागे एव उद्गतानि बहुफलानि यस्यां तया । विराटलक्ष्म्येव विराटश्रियेव, आनन्दितं आह्लादित कीचकानां तदाख्यानां विराटस्यालानां शतं यया, (पक्षे) कीचकाः अन्तस्सुषिरा वेणवः, विन्ध्याटव्या विन्ध्यपर्वतसंबद्धवनमार्गेण, कतिपयदूर किञ्चिद्व्यवहितं, अध्वान मार्ग, गत्वा अतीत्य, जम्बूवृक्षस्य अधःछायायां, स, विशश्राम, इत्यन्वयः । तस्य कीदृशस्येत्यत आह । **कामिन इत्यादिना** ॥ कामी कामुकः, मदनशलाका कामस्य औषधरसवशीकरणशलाका नखाग्रं वा, तया अङ्कितः

स्येव स्निग्धच्छायस्य, वैकुण्ठस्येव लक्ष्मीभृतः, यात्रोद्यतनृपतेरिव घनपत्रशोभितस्य, वेदस्येव भूरिशाखालंकृतस्य, गाणिक्यस्येवानेकपल्लवोज्वलस्य, जम्बूवृक्षस्य, अधश्छायायां विशश्राम ॥

अत्रान्तरे भगवानपि मरीचिमाली आतपक्लान्तवनमहिषलोचनपाटलमण्डलश्चरमाचलशिखरमारुरोह । ततो मकरन्दः फलमूलान्यादाय कथमपि तमभिनन्दिताहारमकार्षीत् ॥

---

चिह्नितः, तस्य, पक्षे, शारिका । 'शारी मदनशलाका विदग्धयोषिन्नखाग्रं च ।' इति कोशः । विकर्तनः सूर्यः तस्येव, स्निग्धा छाया तदाख्या प्रिया यस्य । पक्षे, छाया अनातपः । वैकुण्ठः श्रियः पतिः तस्येव, लक्ष्मीं श्रीः ता बिभर्तीति भृत् तस्य, पक्षे, लक्ष्मीः शोभा । यात्राया उद्यतस्य सयत्नस्य, नृपते राज्ञ इव, घनैः पत्रैः वाहनैः (पक्षे) पलाशैः । शोभितस्य, वेद निगम तस्येव, भूरिशाखाभिः आरुणकाठकादिभि ( पक्षे ) तरुशाखाभि. अलङ्कृतस्य । गाणिक्य गणिकासमूहः तस्येव, पल्लवैः विटैः (पक्षे) किसलयैः । उज्वलस्य भासमानस्य ॥

**अत्रेति** । मरीचिमाली सूर्यः, चरमाचलः अस्तगिरि, मूलानि कन्दान्, तं कन्दर्पकेतु, अभिनन्दितः स्वीकृत आहार. अशन येन सः त, अकार्षीत् । कृञो लुङि रूपम् । अथ आहारस्वीकरणानन्तर, तामेव प्रियतमां दयितां, हृदयमेव फलक तस्मिन्, सङ्कल्पः मनोव्यापारः तद्रूपया तूलिकया कूर्चिकया, लिखितामिव, आलोकयन्, निष्पन्द. अचञ्चलः करणानां इन्द्रियाणां ग्रामः समूहः यस्य सः तादृशः ।

स्वयमपि तदुपभुक्तशेषमकरोदशनम् । अथ तामेव प्रियतमां हृदयफलके सङ्कल्पतूलिकया लिखितामिवालोकयन् निष्पन्दकरणग्रामः कन्दर्पकेतुः मकरन्दविरचिते पल्लवशयने सुष्वाप । अथ याममात्रावखण्डितायां यामिन्यां, जम्बूतरुशिखरे मिथः कलहायमानयोश्शुकशारिकयोः कलकलं श्रुत्वा कन्दर्पकेतुः मकरन्दमुवाच । वयस्य शृणुवस्तावदनयोरालापमिति । ततो जम्बूनिकुञ्जस्थिता शारिका काचित् चिरादागतं शुकं प्रकोपतरळाक्षरमुवाच । कितव शारिकान्तरमन्विष्य गतोऽसि । कथमन्यथा रात्रिरियती तवेति । अथ तच्छ्रुत्वा शुकस्तामवादीत् । भद्रे मुञ्च कोपं, अपूर्वा बृहत्कथा प्रत्यक्षीकृता मया । तेनायं कालातिपात इति । अथ समुपजातकुतूहलया

---

पल्लवशयने किसलयतल्पे, सुष्वाप शिश्ये । **अथेत्यादि** । यामः सार्धसप्तघटिकात्मकः कालविशेषः, याम एव याममात्र तेन अवखण्डितायां विच्छेदितायां, यामिन्यां रजन्यां, मिथः परस्परं, कलहायमानयोः कलहं कुर्वाणयोः । वयस्य मित्र (वयसा तुल्यः वयस्यः) जम्बूनिकुञ्जे जम्बूवृक्षाश्रयलतामण्टपे स्थिता, कितव धूर्त, अन्या शारिका शारिकान्तरं । अन्विष्य गवेषयित्वा, इयती एतावती । 'किमिदम्भ्यांवोघः' इत्यनेन वतुपो वस्य घादेशे तस्य 'आयनेय्' इत्यनेन इयादेशे 'इदम इश्' इत्यनेन इदमः इशादेशे 'यस्येति च' इत्यनेन तस्यापि लोपे 'उगितश्च' इति ङीपि इयतीति रूपम् । कालातिपातः कालहरणं । अनु-

शारिकया मुहुरनुबध्यमानः कथां कथयितुमारेभे । अस्ति मन्दरगिरिशृङ्गैरिव प्रशस्तसुधाधवलैः, बृहत्कथालम्बकैरिव सालभञ्जिकोपशोभितैः, वृत्तैरिव समाणवकक्रीडितैः, करियूथैरिव समत्तवारणैः, सुग्रीवसैन्यैरिव सगवाक्षैः, बलिभवनैरिव सुतलसन्निवेशैः, वेश्मभिरुद्भासितं, धनदेनापि प्रचेतसा, गोपालेनापि रामेण, प्रियंवदेनापि पुष्पकेतुना,

बध्यमान. कथाश्रवणकुतूहलेन अनुसृत्य तत्कथनाय प्रेर्यमाणः। **अस्तीति**। मन्दरगिरि· मन्थानाचलः तस्य शृङ्गैः कूटैरिव, प्रशस्तया सुधया अमृतेन धवलैः, (पक्षे) सुधया लेपनद्रव्यविशेषेण । बृहत्कथा गुणाढ्यकृतिः तस्याः लम्बकैरिव कथाविच्छेदभागैरिव, सालभञ्जिका तन्नाम्नी काचन विद्याधरी तया उपशोभितै· (पक्षे) सालभञ्जिकाः पाञ्चालिका· । वृत्तानि समविषमसंख्याकाक्षरघटितच्छन्दोभागा. तानीव, माणवकक्रीडित नाम किंचन वृत्त तत्सहितैः । (पक्षे) माणवका वटव. तेषां क्रीडितानि विहारा· । करिणा गजाना यूथैरिव, वृन्दैरिव, मत्तवारणा· गन्धहस्तिन· तत्सहिता. तै., (पक्षे) मत्तवारणानि वलभीप्रदेशाः । सुग्रीवस्य, सैन्यैः सैनिकैरिव, गवाक्ष· तन्नामा कश्चन वानरः तत्सहितैः (पक्षे) गवाक्षः वातायनं, बलेः बलिचक्रवर्तिनः भवनैः गृहैरिव, सुतलं पाताळविशेषः तत्र सन्निवेशः विन्यास. येषां तानि तै, (पक्षे) सुतलसन्निवेशः शोभनभूमिसस्थान यद्वा सुतै· लसन् दीप्यमानः निवेशः येषु तानि तैः, धनदेनापि कुबेरेणापि प्रचेतसा वरुणेनेति विरोधः, (पक्षे) धनं ददाति अर्थिनामिति धनदः, प्रकृष्टं चेतः यस्येति प्रचेताः, गोपालेनापि कृष्णेनापि, रामेण बलरामेण इति विरोधः (पक्षे) गोपालः वाक्पतिः । रमयति सर्वान् गुणैरिति राम· तेन । प्रियवदेनापि पुष्पकेतुनेति विरोध·, प्रियवदः

भरतेनापि शत्रुघ्नेन, तिथिपरेणाप्यतिथिसत्कारप्रवणेन, असंख्येनापि संख्यावता, अमर्मभेदिनाऽपि वीरतरेण, अपतितेनापि नानासवासक्तेन, सुदर्शनेनाप्यचक्रेण, अजातमदेनापि सुप्रतीकेन, हंसेनाप्यपक्षपातिना, अविदितस्नेहक्षयेणा-

---

पुष्पकेतुश्चेति द्वौ गन्धर्वौ । (पक्षे) प्रियवदतीति प्रियवदः पुष्प सौजन्य केतु· ध्वज यस्य सः तेन, भरतेनापि शत्रुघ्नेनेति विरोधः । भरतः कैकेयीपुत्रः शत्रुघ्नस्सुमित्रापुत्र· । (पक्षे) भ नक्षत्र ज्योतिश्शास्त्रमित्यर्थः। तत्र रतेन आसक्तेन, शत्रून् हन्ति नाशयतीति, शत्रुघ्नः तेन । तिथौ विहिततत्तत्तिथिकर्माणि परेण आसक्तेनापि, न तिथिसत्कारप्रवणेनेति विरोधः । श्राद्धदानाद्यर्थकतिथिकालज्ञानपरः तिथिपरः, अतिथीना आगन्तूनां सत्कारे पूजने प्रवणः अभिनिविष्टः इति परिहारः । असङ्ख्येनापि सख्यारहितेनापि सङ्ख्यासहितेनेति विरोध (पक्षे) सख्य युद्ध तद्रहितेन (प्रत्यर्थिनोऽभावादिति भाव.) सख्यावता पण्डितेन । जीवस्थान मर्म तद्भेदी न भवतीति तादृशेनापि, वीरतरेण अतिशूरेण । वीरस्य अमर्मभेदित्व न घटत इति विरोध. । मर्म तत्वं तद्भेदी न भवति । विशेषेण ईः श्रीः रा आदाने विशेषेण ई रातीति वीरं तादृक् तल पाणितल यस्येति परिहारः। अपतितेनापि पातित्यरहितेनापि, नानाभूते आसवे मद्ये आसक्तः इति विरोधः । अः विष्णु· तस्मिन् पतितेन विष्णुभक्तेन, नानासवाः अध्वराः तत्र आसक्तेनेति परिहारः । सुदर्शन भगवतश्चक्र तादृशेनापि अचक्रेणेति विरोध·, शोभन मङ्गल्य दर्शन यस्य सः। चक्र माया तद्रहितश्च । अजातः अनुत्पन्नः मदः दान यस्य सः तादृशेनापि, सुप्रतीकेनेति विरोधः। सुप्रतीक दिग्गजविशेष· सुप्रतीकस्याजातमदत्व विरुध्यते (पक्षे) अनुत्पन्नगर्वः,

पि कुलप्रदीपेन, अग्रन्थिनापि वंशपोतेन, अग्रहेणापि काव्यजीवज्ञेन, निदाघदिवसेनेव वृषवर्धितरुचिना, माघविरामदिवसेनेव तपस्यारम्भिणा, नभस्वतेव सत्पथगामिना, विवस्वतेव गोपतिना, महेश्वरेणेव चन्द्रं दधता, निवासिजनेनानुगतं, घनापगमेनेव दर्शितखण्डाभ्रेण, वेलातटेनेव प्रवा-

शोभनावयवयुतश्च । हंसेनापि मरालेनापि पक्षाभ्यां पतितुं गन्तुं शीलं अस्य नास्तीति विरोधः, (पक्षे) हंसः श्रेष्ठः, अपक्षपाती पक्षपातरहितः । अविदितः अज्ञातः स्नेहक्षयः तैलहानिः येन तादृशेनापि, कुलप्रदीपेन गृहदीपेनेति विरोधः, (पक्षे) अज्ञातप्रेमभङ्गः वंशप्रकाशकश्च । अग्रन्थिनापि अपर्वणापि, वंशपोतेन वंशाङ्कुरेणेति विरोधः, (पक्षे) अग्रन्थिः अकुटिलस्वभावः वंशपोतः कुलपुत्रश्च, अग्रहेणापि काव्यजीवज्ञेनेति विरोधः, ग्रहः ज्योतिर्मण्डलं, शुक्रबृहस्पतिबुधानां अग्रहत्वं विरुद्धं (पक्षे) अग्रहः अबन्धनः, यद्वा अः विष्णुः तद्ग्रहः यस्य, विष्णुभक्त इत्यर्थः । काव्यतत्त्वज्ञेन च । निदाघदिवसः ग्रीष्मकालदिनं तेनेव, वृषः वृषभराशिः तेन वर्धिता रुचिः आतपप्रकाशः यत्र, (पक्षे) वृषे सुकृतकर्मणि वर्धिता रुचिः इच्छा यस्य । माघस्य माघमासस्य विरामदिवसः अवसानदिनं तेनेव, तपस्यः फाल्गुनमासः तस्यारम्भः उपक्रमः अस्यास्तीति तेन, (पक्षे) तपसि व्रतानुष्ठाने आरम्भिणा उपक्रमसहितेन । नभस्वान् वायुः तेनेव, सत्पथगामिना आकाशगामिना, (पक्षे) साधुमार्गगामिना । विवस्वान् सूर्यः तेनेव, गवां किरणानां पतिः तेन (पक्षे) गवां वाचां पतिः । महेश्वरेण रुद्रेणेव, चन्द्रं शीतांशुं, दधता बिभ्राणेन, (पक्षे) चन्द्रं सुवर्णं 'चन्द्रं स्वर्णञ्च गाङ्गेयं' इति कोशः । एवंभूतेन निवासिजनेन, अनुगतं अनुसृतं, घनापगमः वर्षावसानं तेनेव, दर्शिताः खण्डाभ्राः मेघशकलाः यत्र (पक्षे) खण्डाभ्रं नख-

लमण्डनेन, देवाङ्गनाजनेनेवेन्द्राणीपरिचयविदग्धेन, गजेन्द्रेणेव पल्लववर्धितरुचिना, कोकिलेनेव परपुष्टेन, भ्रमरेणेव कुसुमेषु लालितेन, जलौकसेव रक्ताकृष्टिनिपुणेन, यायजूकेनेव सुरतार्थिना, महानटबाहुवनेनेव बद्धभुजङ्गाङ्केन, गरुडेनेव विलासिहृदयतापकारिणा, अन्धकेनेव शूलानामुपरिगतेन, वेश्या-

---

क्षतविशेषः, 'खण्डाभ्र भुजमूले यत्तलाकार नखक्षतम्' इति कामतन्त्रे । वेलातट समुद्रतीरं तेनेव, प्रवाल विद्रुमः तदेव मण्डन भूषण यस्य तेन, (पक्षे) प्रवालाः प्रकृष्टाः केशाः मण्डनानि यस्य स तेन । देवाङ्गनाजनः अमरीजनः तेनेव, इन्द्राणी शची तस्याः परिचये विदग्धेन चतुरेण, (पक्षे) इन्द्राणी सुरतविशेषः । गजेन्द्रः वारणपतिः तेनेव, पल्लवेषु किसलयेषु वर्धिता रुचिः इच्छा यस्य, (पक्षे) पल्लवाः विटाः । कोकिलेनेव पिकेनेव, परेण अन्येन पक्षिणा वायसेनेति यावत् । तेन पुष्टेन पोषितेन, 'वनप्रिय परभृतः कोकिलः पिक इत्यपि' इत्यमर. । (पक्षे) परैः अन्यैः पुष्ट । भ्रमरेणेव भृङ्गेनेव, कुसुमेषु पुष्पेषु, लालितेन, (पक्षे) कुसुमेषु. मन्मथः तेन लालितेन । जलौकाः जलूका 'रक्तपातुजलूकायां स्त्रिया भूम्नि जलौकसः ।' इत्यमरः । तयेव रक्तस्य असृजः आकृष्टिः आकर्षणं तत्र निपुणेन, (पक्षे) रक्तानां अनुरक्तानां । यायजूकः यजनशीलः पुरुषः तेनेव, सुरता देवत्व तां अर्थयत इति सुरतार्थी तेन (पक्षे) सुरत निधुवन । महानटः रुद्र तस्य बाहुवनेनेव भुजसमूहेनेव, बद्धैः भुजङ्गैः सर्पैः अङ्कः चिह्न यस्मिन (पक्षे) बद्धः आश्रितः भुजङ्गानां विटाना अङ्कः उत्सङ्गः येन, गरुडेनेव वैनतेयेनेव । बिलासिनां बिलाश्रयाणा सर्पाणां हृदयस्य मनसः तापकारिणा, (पक्षे) विलासिनां श्रृङ्गारिणां । अन्धकः कश्चिदसुरः तेनेव, शूलानां शूलायुधाना

जनेनाधिष्ठितं, कुसुमपुरं नाम नगरम् । यत्र च सुरासुरमौलिमालालालितचरणारविन्दा शुम्भनिशुम्भमहासुरमहावनदावानलज्वाला महिषमहासुरगिरिवरवज्रधारा प्रणयकलहप्रणतगङ्गाधरजटाजूटस्खलितजाह्नवीजलधाराधौतपादपद्मा भगवती कात्यायनी चण्डाभिधाना स्वयं निवसति। यस्य च परिसरे सुरासुरमज्जनगळितमकुटकुसुमरजोराजिपरिमळवाहिनी

---

उपरिगतेन । अन्धक भैरवेण शूलाग्रमारोपित इति प्रसिद्धिः (पक्षे) शसयोरभेदात् सूला वेश्या तासां उपरिगतेन श्रैष्ठ्य प्राप्तेन । वेश्याजनेन गणिकाजनेन अधिष्ठित आश्रित, कुसुमपुर नाम कुसुमपुरमिति नाम्ना प्रसिद्ध, नगर, आस्ते इति शेप । **यत्र चेत्यादि** ॥ यत्र कुसुमपुरे, कात्यायनी , स्वय, निवसतीति सम्बन्धः । सा कीदृशीत्यत आह । सुरासुरेत्यादिना । सुरासुराणां देवदानवानां मौलिमालया शिरोमाल्येन मस्तकश्रेण्या वा, लालिते आदृते चरणारविन्दे पादाम्बुजे यस्यास्सा तादृशी, शुम्भनिशुम्भौ तन्नामानौ यौ महासुरौ दैत्येन्द्रौ तद्रूपस्य महावनस्य महारण्यस्य दावानलज्वाला दवाग्निशिखा, महिषासुर एव गिरिवरः पर्वतराज. तस्य वज्रधारा दम्भोळिकोटि', प्रणयकलहेन प्रणतस्य स्वापराधक्षापणाय वन्दमानस्य गङ्गाधरस्य शिवस्य य. जटाजूट. जटाबन्ध. तस्य कोट्यां स्खलितायाः चञ्चलाया जाह्नव्या. गङ्गाया जलधारया धौते क्षालिते पादपद्मे यस्यास्सा तादृशी, चण्डाभिधाना चण्डाख्या, कात्यायनी दुर्गा ॥ **यस्य चेति** ॥ यस्य कुसुमपुरस्य, परिसरे सविधे, भागीरथी गङ्गा, प्रवहति वहतीत्यन्वय । सा कीदृशीत्यत आह । सुरासुरेत्यादिना । सुरासुराणा देवदानवाना

पितामहकमण्डलुधर्मद्रवधारा धरातलपतितसगरसुतसुरनगरसमारोहणपुण्यरज्जुः ऐरावतकपोलघर्षणकम्पिततटगतहरिचन्दनस्यन्दमानरससुरभितसलिला सलीलसुरसुन्दरीनितम्बबिम्बाहतितरळिततरङ्गा स्नानावतीर्णसप्तर्षिमण्डलविमलजटाटवीपरिमळपुण्यवेणी एणीतिलकमकुटविकटजटाजूटकुहरभ्रान्तिजनितसंस्कारेवाद्यापि कुटिलावर्ता, धरणीव

---

मज्जनेन स्नानेन गळिता स्रस्ता या मकुटकुसुमरजोराजिः शिरोवतंसप्रसूनपरागश्रेणी तस्याः परिमळ सौरभ वहन्तीति वाहिनी । पितामहस्य ब्रह्मण' कमण्डलो. कुण्ड्याः धर्मद्रवधारा सुकृतधारारूपिणी, धरातले भूम्यां पतितानां कपिलकोपाग्निना भस्मसात्कृताना सगरसुताना सागराणां सुरनगरस्य स्वर्गस्य समारोहणे पुण्यरज्जुः सुकृतमयरज्जुरिव, ऐरावतस्य तदाख्यस्य इन्द्रगजस्य कपोलयोः गण्डयोः घर्षणेन कम्पितात् चलितात् तटगतहरिचन्दनात् तीरस्थहरिचन्दनवृक्षात् स्यन्दमानेन अधस्स्रवता रसेन द्रवेण सुरभित सलिल यस्यास्सा, सलीलाना लीलावतीनां सुरसुन्दरीणां अमरीणा नितम्बबिम्बाहत्या तरळिताः चाञ्चल्यमासादिताः तरङ्गा. यस्यास्सा, स्नानाय अवतीर्णस्य सप्तर्षिमण्डलस्य विमला निर्मला या जटाटवी जटाभारः तस्याः परिमळेन सौरभेण पुण्या वेणी प्रवाहः यस्यास्सा, एणीतिलक चन्द्र स. मकुटे यस्य सः ईश्वर इत्यर्थः । तदीयः यः विकटः विशालः जटाजूटः जटाबन्ध. तस्य कुहरे गर्ते भ्रान्तिः भ्रमण तया जनितः उत्पादितः सस्कारः वासना यस्यास्या तादृशीव, कुटिला॰ आवर्ताः जलभ्रमाः यस्यां सा, धरणीव अवनिरिव, सार्वभौमः

सार्वभौमकरस्पर्शोपभोगक्षमा जलदकालसरसीव गन्धोपरिभ्रमद्भ्रमरमालानुमीयमानजलमूलमग्नकुमुदपुण्डरीका छन्दोविचितिरिव मालिनीसनाथा, ग्रहपङ्क्तिरिव सूर्यात्मजोपशोभिता सराजहंसाच, शरत्कालदिनश्रीरिवोज्ज्वलत्कोकनदा प्रबुद्धपुण्डरीकाक्षाच, हृतान्धतमसाऽपि तमसान्विता, वीचि-

---

तन्नामा दिग्गजः तस्य करस्पर्शः शुण्डादण्डस्पर्शः तदुपभोगस्य क्षमा अर्हा (पक्षे) सार्वभौम. चक्रवर्त्ती तस्य कर· प्रजाभिर्देयो भागः तस्य स्पर्श दान तेन उपभोगक्षमा । जलदकालः वर्षासमयः तत्सम्बन्धिनी सरसीव, गन्धेन मदसौरभेण उपरिभ्रमन्त्या समन्ताद्भ्रमणं विदधत्या भ्रमरमालया भृङ्गराज्या (हेतुना) अनुमीयमानौ ऊह्यमानौ जलमूलमग्नौ जलान्तर्निमग्नौ कुमुदपुण्डरीकौ तदाख्यौ दिग्गजौ यस्यां सा (पक्षे) दिने-दिने अभिवर्धमानेन जलेन मूले मग्नानि कुमुदानि पुण्डरीकाणि च यस्यां सा, छन्दोविचितिरिव छन्दश्शास्त्रमिव, मालिनी तदाख्या काचिन्नदी तया सनाथा सहिता (पक्षे) मालिनी वृत्तविशेषः । ग्रहाणां सूर्यादिज्योतिर्ग्रहाणा पङ्क्तिरिव श्रेणीव, सूर्यात्मजा यमुना तया उपशोभिता राजहसाः कलहसाः तैस्सह वर्तते इति सराजहंसा च (पक्षे) सूर्यात्मजः शनिः । राजा चन्द्रः, हसः सूर्यः । शरत्कालस्य दिनश्रीरिव दिवसशोभेव, उज्ज्वलन्तः भासमानाः कोकाना चक्रवाकाणां नदाः नादाः यस्यां सा, प्रबुद्धानि विकसितानि पुण्डरीकाण्येव तामरसान्येव अक्षीणि यस्याः सा पु—णि अक्षीणीव यस्यामिति वा । (पक्षे) कोकनदानि तामरसानि । पुण्डरीकाक्षः श्रिय·पतिः । शरदः भगवदुत्थानसमयत्वात् । हृत नाशितं अन्धतमस गाढान्धकारं येन तादृश्यपि तमसा अन्धकारेण अन्वितेति विरोधः । तमसया नद्या अन्वितेति वास्तवार्थः । वीचिभि· तरङ्गैः कलि-

कलिलापि अवीचीदुर्गमा, भगवती भागीरथी प्रवहति ॥ यच्च दिशि दिशि सन्तानकतरुकुसुमनिकरमिव शिखरावलग्नं तारागणमिव कुसुमनिकरमुद्वहद्भिः उत्तम्भितजलदैः अनूरुकशाभिघातपरवशरविरथतुरगग्रासविषमिताग्रपल्लवैः चन्द्रचमूरुचरणसंक्रान्तामृतकणनिकरसेकसञ्जातबहुलसुकुमारनवकुसुमकिसलयसहस्रदर्शिताकालसन्ध्याकालविभ्रमैः भरतचरितैरिव सदारामाश्रितैः, महावीरैरिव नारिकेळीधरैः,

---

लापि सम्बद्धाऽपि अर्वाचीदुर्गमेति विरोधः। परिहारस्तु, वीची दुर्गमाविति नरकविशेषौ तौ न भवतो यस्या इति। भगवती माहात्म्यशालिनी। **यच्च दिशीति** ॥ यत् कुसुमपुरं, दिशि दिशि सर्वासु दिक्षु, सन्तानकतरोः तदाख्यस्य देवतरुविशेषस्य कुसुमनिकरमिव अधःपतितप्रसूनराजिमिव, शिखरे अग्रभागे अवलग्नं सम्बद्धं तारागणमिव नक्षत्रसमूहमिव, कुसुमनिकरं पुष्पसमूहं, उद्वहद्भिः बिभ्राणैः, उत्तम्भिताः निजोच्छ्रायेणोपर्युत्क्षिप्ता जलदाः मेघाः यैस्तैः, अनूरोः सूर्यसारथेः कशाभिघातेन ताडन्याभिघातेन परवशानां अस्वतन्त्राणां रविरथतुरगाणां सूर्याश्वानां ग्रासैः कबलनैः विषमिताः अग्रपल्लवाः येषां ते तादृशैः, चन्द्रचमूरोः चन्द्रहरिणस्य चरणेषु संक्रान्ताः सम्बद्धाः ये अमृतकणनिकराः सुधाबिन्दुसन्दोहाः तेषां सेकेन सञ्जातानि उत्पन्नानि यानि बहुळानि अमितानि सुकुमाराणि अतिमृदुलानि नवानि कुसुमानि किसलयानि च तेषां सहस्रैः दर्शितः अकालसन्ध्याकालविभ्रमः यैस्ते तैः, भरतस्य कैकेयीपुत्रस्य चरितैरिव, सदारामाणि श्रेष्ठान्युपवनानि आश्रितैः (पक्षे) सदा रामाश्रितैः राघवाश्रितैः, महावीरैरिव, नारिकेळी वृक्षविशेषः तत्सहिता धरा भूमिः येषां तैः (पक्षे) अरिः शत्रुः तस्य केळी क्री-

असंस्कृततरुणैरिवातिदूरप्रश्रयाक्षैः, तपस्विभिरिव जपासक्तैः, प्रसाधितैरिव कृतमालोपशोभितैः, मातङ्गकुम्भस्थलविदारणोत्सुकसिंहैरिव उत्फुल्लकेसरैः, सारिष्टैरपि चिरजीविभिः, मुनियुतैरपि मदनाधिष्ठितैः, उपवनपादपैः उपशोभितं, अदितिजठरमिव अनेकदेवकुलाध्यासितं, पातालमिव महाबलि-

डा ता न धरन्तीति तैः। असस्कृता. अशिक्षिता तरुणा युवान. तैरिव, अतिदूरप्रश्रयाः अत्युच्छ्रायवन्तः अक्षा विभीतकवृक्षाः येषु तैः (पक्षे) अतिदूर· अत्यन्तासन्निहितः प्रश्रय विनय येषां तानि तादृशानि अक्षाणि इन्द्रियाणि येषा तै. । तपस्विभि मुनिभिरिव, जपा जपाकुसुम तत्सबद्धे (पक्षे) जपे मन्त्रोच्चारणे आसक्तैः । प्रसाधितैरिव, कृतमालैः आरेवृक्षैः उपशोभितै· (पक्षे) कृता सम्यक् ग्रथिता या माला तया उपशोभितै । मातङ्गानां गजानां कुम्भस्थलस्य मस्तकप्रदेशस्य विदारणे विदळने उत्सुकै उद्युक्तैः सिंहैरिव, उत्फुल्लाः विकसिताः केसराः चाम्पेयवृक्षा. येषु तैः (पक्षे) उत्फुल्ला· केसरा. स्कन्धरोमाणि येषा ते तै । सारिष्टैरपि ग्रहपीडाद्यरिष्टयुक्तैरपि, चिरजीविभि. दीर्घायुष्कैरिति विरोध । (पक्षे) अरिष्ट. फेनिलवृक्ष तत्सहितैः। चिर जीवन्तीति चिरजीवाः काका· तद्वद्भि. । यद्वा चिराय विद्यमानै. । मुनिभि. महर्षिभि. युतै. सहितैरपि, मदनेन कामेन अधिष्ठितैरिति विरोधः (पक्षे) मुनय. अगस्त्यवृक्षा· । मदनाश्च वृक्षविशेषा· । तादृशै उपवनपादपै. आरामतरुभिः, उपशोभित भासमान । अदिते दाक्षायण्याः जठरमिव कुक्षिरिव अनेकै. देवकुलैः देवगृहै. उपशोभित । (पक्षे) अनेकेन देवकुलेन अमरसमूहेन अध्यासित अधिष्ठित । देवजननीत्वात्तस्या. । पाताल बलिसद्मेव, महद्भिः बलिभि· पराक्रमशालिभि. शोभित (पक्षे) महाबलिः विरोचनकुमारोऽसु-

शोभितं भुजङ्गाधिष्ठितं च,ससुरालयमपि पवित्रं, भोगियुक्तमप्यनुपद्रुतम् । तत्र सुरतरभसखिन्नप्रसुप्तसीमन्तिनीरत्नताटङ्कमुद्राङ्कितबाहुदण्डः, प्रचण्डप्रतिपक्षलक्ष्मीकेशपाशकुसुममालाऽऽमोदसुरभितकरकमलः, प्रशस्तकेदार इव बहुधान्यकार्यसम्पादकः, पार्थ इव सुभद्रान्वितः सभीमसेनश्च, कृष्ण इव सत्यभामानुरक्तः सबलश्च, शृङ्गारशेखरोनाम प्रति-

रराज तेन शोभितम् । भुजङ्गा विटाः, अन्यत्र सर्पाः । ससुरालयमपि मदिरापानस्थानसहितमपि, पवित्र पावन इति विरोधः (पक्षे) सुरालयानि देवगृहाणि तत्सहित । पवित्र परिशुद्ध च । भोगिभिः सर्पैः युक्तमपि, अनुपद्रुत उपद्रवरहित इति विरोधः । (पक्षे) भोगिनः विलासिनो राजान । अनुपद्रुत इतिबाधारहित च ।

**तत्रेति** ॥ तत्र शृङ्गारशेखरो नाम प्रतिवसति इति सम्बन्धः । मर्कादृगिवत आह । सुरतेत्यादिना । सुरते दयितसभोगे यः रभसः संरम्भः तेन खिनानां श्रान्ताना अत एव प्रसुप्तानां गाढ निद्राणाना सीमन्तिनीनां प्रमदानां रत्नताटङ्कमुद्रया रत्नखचितकर्णिकाचिह्नेन अङ्कितः बाहुदण्ड यस्य, प्रचण्डाना उग्राणा प्रतिपक्षाणा शत्रूणा लक्ष्म्या श्रिया केशपाशः अलकसमूह तत्सबन्धिनां कुसुमाना आमोदेन सौरभेण सुरभित सौरभमापादित करकमल यस्य । प्रशस्त केदार इव क्षेत्रमिव, बहुधा नानाप्रकारेण अन्यकार्यसम्पादक परोपकारप्रवण इत्यर्थः। (पक्षे) बहुसस्यकार्योत्पादक । पार्थ इव अर्जुन इव, सुभद्रेण मङ्गलेन अन्वितः । भीमया सेनया वाहिन्या सहवर्तत इति सभीमसेनः । (पक्षे) सुभद्रा तदाख्या महिषी तया अन्वित । भीमसेनेन वृकोदरेण सहितश्च । कृष्णः शौरि स इव, सत्ये याथार्थ्ये, भायां दीप्त्यां मायां लक्ष्म्यां च

वसति । यो वलभित्पावको धर्मराण्णिऋऋतिः, प्रचेतास्सदागतिर्धनदश्शङ्कर इत्यष्टमूर्तिधृदप्यनष्टमूर्तिः । (श्लो) सुराणां पाताऽसौ स पुनरतिपुण्यैकहृदयो ग्रहस्तस्यास्थाने गुरुरुचितमार्गे स निरतः। करस्तस्यात्यर्थं वहति शतकोटिप्रणयितां

---

अनुरक्त. । बलेन सैन्येन देहदार्ढ्येन वा आन्वितश्च (पक्षे) सत्यभामाया तदाख्याया पत्न्या अनुरक्तः, बलेन बलरामेण सहितश्च । **य इत्यादि** । य, वलो नाम कश्चिदसुर· तं भिनत्तीति वलभित् इन्द्रः, वबयेरभेदात् (पक्षे) बलभित् शत्रुबलहन्ता । पावक. अग्नि· पवित्रश्च । धर्मराट् यमः धर्मशीलो राजाच । निऋऋतिः राक्षस (पक्षे) निर्गता ऋतिः दुःख यस्मात् सः । प्रचेता. वरुणः (पक्षे) प्रकृष्टमनाश्च । सदागतिः वायु. (पक्षे) सतां आगतिः प्राप्तिः स्थान च । धनदः कुबेर. (पक्षे) धनदाताच । शङ्करः रुद्रः, (पक्षे) मङ्गळकरश्च । इति एव अष्टमूर्तिधृदपि अनष्टमूर्तिरिति विरोध. । अनष्टा सपूर्णा मूर्ति· यस्येति च । **सुराणामिति** । अनेन श्लोकेन इन्द्रादप्यस्य राज्ञो व्यतिरेकेणोत्कर्ष उच्यते । असौ प्रसिद्ध. इन्द्र·, सुराणा देवानां, पाता रक्षक , मद्याना पाता इति च स्फुरति । स पुनः स राजातु, अतिपुण्यैकहृदय. अत्यर्थ पुण्यैकप्रवणचित्त. । तस्य इन्द्रस्य, आस्थाने सदसि, ग्रह. नवग्रहेष्वन्यतम., गुरु बृहस्पतिः । अस्थाने अयोग्यविषये, ग्रहः अभिनिवेश , गुरुः अमित , इति च । सः राजातु, उचितमार्गे, निरतः आसक्त । तस्य इन्द्रस्य कर , अत्यर्थं अतितरां, शतकोटिः वज्र तत्प्रणयिता वहति । शतकोटिसख्यापरिमितधनप्रणयितामिति च स्फुरति । स. राजा तु, सर्वस्व दाता वदान्याग्रेसर इत्यर्थः । अतः, सुरेन्द्र इन्द्र, तृणमिव, विजयते अध करोति । **शिखरिणीवृत्तम्** । 'रसैरुद्रैश्छिन्ना यमनसभलागश्शिखरिणी ।' इति लक्षणात् ।

स सर्वस्वं दाता तृणमिव सुरेन्द्रं विजयते ॥ जीवाकृष्टिं स चक्रे मृथभुवि धनुषश्शत्रुरासीद्गतासुर्लक्षाप्तिर्मार्गणानामभवदरिबले सद्यशस्तेन लब्धम् । मुक्ता तेन क्षमेति त्वरितमरिबलैरुत्तमाङ्गैः प्रविष्टा पञ्चत्वं द्वेषिसैन्यैर्गतमवनिपतिर्नाप सङ्ख्यान्तरं सः ॥ यत्रच राजनि राजनीतिचतुरे चतुरम्बुधि-

---

राज्ञा आश्चर्यं कृतमिति प्रतिपाद्यते । **जीवेत्यादिना** । स राजा शृङ्गारशेखरभूपतिः, मृथभुवि युद्धभूमौ, धनुषः, जीवाकृष्टिं ज्याकर्षणं प्राणाकर्षणं च चक्रे कृतवान् । शत्रुः प्रत्यर्थी, गतासुः मृतः, आसीत् । अन्यस्य जीवाकर्षणे कृते अन्यो मृतोऽभूदित्येतदाश्चर्यम् । मार्गणानां बाणानां अरिबले शत्रुसैन्ये, लक्षाप्तिः लक्ष्यप्राप्तिः, अभवत् । मार्गणानां याचकानां लक्षसङ्ख्याकधनप्राप्तिरिति च स्फुरति । सद्यशः सत्कीर्तिः, तेन राज्ञा, लब्धं प्राप्तम् । अन्यस्माद्याचकानां धनप्राप्तिः अन्यस्य च यशःप्राप्तिरित्येतदाश्चर्यं । तेन, क्षमा क्षान्तिः मुक्ता त्यक्ता क्रुद्ध आसीदित्यर्थः । भूमिस्त्यक्तेति च स्फुरति । त्वरितं शीघ्रं, अरिबलैः शत्रुसैन्यैः, उत्तमाङ्गैः शिरोभिः, सा क्षमा, प्रविष्टा गृहीता । अत्र राज्ञः क्रोधसमकाल एव शत्रुशिरांसि भूमौ निपतितानीति लाघवमेवाश्चर्यम् । द्वेषिसैन्यैः शत्रुबलैः, पञ्चत्वं मरणं पञ्चत्वसंख्याच । गतं प्राप्तं । सः अवनिपतिः राजा तु, संख्यान्तरं युद्धान्तरं अन्यां सङ्ख्यामिति च स्फुरति । नाप न प्राप्तवान् । युद्धान्तरप्रसक्तिरहितं शत्रुसंहारं कृतवानित्याश्चर्यम् । **असंगत्यलंकारः** ॥ 'विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसङ्गतिः' इति लक्षणात् । **स्रग्धरा वृत्तम्** । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्,' इति लक्षणात् । **यत्रेति** ॥ राजनीत्यां चतुरे समर्थे, चतुरवयवा-

वेलामेखलाया भुवो नायके शासति वसुमतीं, पितृकार्येषु वृषोत्सर्गः, शशिनः कन्यातुलारोहणं, प्रसवेषु शूलव्याघातचिन्ता, दक्षिणवामकरणं दिङ्निश्चयेषु, शरभेदो दधिषु, शृङ्खलाबन्धो वर्णग्रथनासु, उत्प्रेक्षाक्षेपावलङ्कारेषु, लक्षदानच्युतिस्सायकानां, क्विपां सर्वविनाशः, कोशसङ्कोचः कमला-

श्चते अम्बुधयश्च चतुरम्बुधयः तेषा वेला मर्यादाभूमय ता एव मेखला काञ्चीदाम यस्याः, भुवः अवनेः, नायके नेतरि, राजनि, वसुमतीं भूमिं, शासति रक्षति सति । वृषोत्सर्गः वृषभोत्सर्जनं, पितृकार्येषु पित्रुद्देशेन क्रियमाणेषु और्ध्वदैहिककर्मसु । नात्रेति परिसङ्ख्या (पक्षे) वृषोत्सर्गः धर्मत्यागः । कन्यातुले राशी तदारोहण, शशिन चन्द्रस्य, (पक्षे) कन्याया परीक्षार्थ तुलादण्डारोहण । शूलं गर्भतोद. तेन व्याघातः नाश तत्र चिन्ता, प्रसवेषु प्रसूतिषु । (पक्षे) शूलेन आयुधेन व्याघातचिन्ता हिंसाशङ्का । दक्षिणवामकरण दक्षिणवामयोर्विभागकरण, दिङ्निश्चयेषु, (पक्षे) दक्षिणानां सरळानां वामकरण प्रातिकूल्यकरण । शरस्य मस्तुनः भेदः विदळन, दधिषु, (पक्षे) शरभेदः बाणेन विदारण । शृङ्खलाबन्ध तदाकारोऽक्षररचनाविशेषः, सः, वर्णग्रथनासु चित्रकाव्यस्थाक्षरविन्यासेषु, (पक्षे) शृङ्खला निगळः तया बन्धः नहन । उत्प्रेक्षाऽऽक्षेपौ अलङ्कारविशेषौ तौ, अलङ्कारेषु (पक्षे) उत्प्रेक्षा अनर्थादीना दीर्घदर्शन । आक्षेपः महदुक्तस्य विचारणात्प्रतिषेधः, निन्दा वा । लक्षं लक्ष्यं तस्य दान भेदन तस्मात् च्युतिः, सायकाना बाणाना । (पक्षे) लक्षसङ्ख्याकधनप्रदानच्युतिः । सर्वविनाशः सर्वलोपः, क्विपां क्विपः व्याकरणशास्त्रप्रसिद्धाः प्रत्ययाः तेषां । (पक्षे) सर्वविनाशः अत्यन्ताभावः । कोशाना पद्ममुकुलानां सङ्कोच, कमलाकरेषु पद्माकरेषु (पक्षे) कोशाना धनस्चयाना

करेषु न जनेषु, जातिविहीनता दुष्कुलेपु न पुष्पमालासु, शृ- ङ्गारहानिर्जरत्करिषु न जनेषु, दुर्वर्णयोगः कर्णिकादिषु न कामिनीपु, गान्धारविच्छेदो रागेषु न पौरवनितासु, मूर्च्छा- धिगमो गानेषु न प्रजासु, कर्माभावो नीचसेवकेपु न परि धानेषु, मलिनाम्बरत्वं निशासु न जनेपु, चलरागता गीतेषु

---

सङ्कोचः न्यूनता । जाति मालतीकुसुमं तद्विहीनता राहित्य, मालासु स्रक्षु, (पक्षे) जातिः आभिजात्य तद्विहीनता । शृङ्गारं गजमण्डनद्रव्य । तस्य हानि जरत्करिषु वृद्धगजेषु । न जनेषु (पक्षे) शृङ्गारस्य तदाख्य- स्य रसराजस्य हानिः अभावः । दुर्वर्णस्य रजतस्य योगः सम्बन्धः, कर्णिकादिषु कर्णभूषणादिषु । (पक्षे) हीनजातिः वैवर्ण्यं वा । गान्धारः स्वरविशेषः तस्य विच्छेदः, रागेषु न पौरवनितासु पुरसुन्दरीषु (पक्षे) गा- न्धारः रतिः कुङ्कुम वा। एतेनास्य राज्ये न कापि विधवेति सूचित । मू- र्च्छा तानविशेषः तस्याः अधिगमः उपलम्भ , गानेषु गीतिषु । न प्रजासु। (पक्षे) मोहः । कर्मणः शास्त्रचोदितस्य अग्निहोत्रादिकर्मण. अभावः, नीचसेवकेषु जात्या अधमेषु किङ्करेषु । न परिधानेषु अधोवस्त्रेषु । (पक्षे) कर्म कौशेय । एतेन सर्वेऽप्यस्य राज्ये धनिन इति सूचित । 'कर्म कर्माणि सद्ग्रन्थे कौशेयेऽपि कृषौ क्रतौ ।' इति हलायुध । मलिनं अन्धकारेण नील अम्बर आकाश यस्यां सा मलिनाम्बरा तस्या भाव. मलिनाम्बरत्व तत् निशासु रात्रिषु, न जनेषु (पक्षे) मलिनं धूसर अम्बरं वस्त्र । चलः रागः गीतस्वरविशेषः येषु ते चलरागाः तेषां भावः तत्ता, गीतेषु गानेषु न विदग्धेषु पण्डितेषु रसिकेषु वा । (पक्षे) रागः अनुराग । सर्वेऽप्यस्य राज्ये विदग्धाः स्थिरानुरागाश्चेति भावः ।

न विदग्धेषु, वृषहानिः निधुवनलीलासु न पौरेषु, भंगुरत्वं रागविकृतिषु न चित्तेषु, अनङ्गता कामदेवे न परिजनेषु, मारागमो यौवनोद्गमेषु न प्रकृतिषु, द्विजाघातस्सुरतेषु न प्रजासु, रशनाबन्धो रतिकलहेषु न दानानुमतिषु, अधररागता तरुणीषु न परिजनेषु, कृन्तनं कमलेषु न पुरन्ध्रीषु, निस्त्रिंशत्वमसिषु न मनस्सु, करवालनाशो योधेषु न जनपदेषु

---

वृषहानिः शुक्रोत्सर्गः । निधुवनलीलासु सुरतक्रीडासु । न पौरेषु (पक्षे) वृषस्य सुकृतस्य हानि. । भङ्गुरत्वं शृङ्गारचेष्टाविशेषः, रागविकृतिषु रागविकल्पनासु । न चित्तेषु (पक्षे) भङ्गुरत्व कौटिल्यम् । अनङ्गता अङ्गशून्यत्व, कामदेवे मन्मथे, न परिजने किङ्करेषु (पक्षे) अनङ्गत्व अङ्गवैकल्यं, वामनकुब्जपङ्ग्वादिभाव इति यावत् । मारस्य मदनस्य आगम आगतिः यौवनोद्गमेषु तारुण्योत्पत्तिषु । न प्रकृतिषु प्रजासु (पक्षे) मारस्य मरणस्य शत्रोर्वा आगम प्राप्ति । द्विजाघात. दन्तक्षत, सुरतेषु निधुवनेषु, न प्रजासु । (पक्षे) द्विजाघात ब्राह्मणवध । रशनया मेखलया बन्ध. बन्धनं, रतिकलहेषु सुरतकालिकेषु प्रणयकलहेषु । प्रणयिन्यो दयितानार्द्रापराधान् प्रणयकलहकालेषु रशनया बध्वा सरोपहुङ्कारं तत्कृतव्यलीक प्रकटीकृत्य भर्त्सयन्तीति कामतन्त्ररहस्य । नदानानुमतिषु (पक्षे) शसयोरभेदात् रसना जिह्वा तस्या· बन्धः सयमन निरोध इति यावत् । अधरराग. ओष्ठराग तद्वत्त्व, तरुणीषु युवतिषु, न परिजनेषु (पक्षे) अधरः हीन. राग स्वामिप्रीतिः तद्वत्त्व । कृन्तन छेदनं, कमलेषु पद्मेषु, न पुरन्ध्रीषु स्त्रीषु (पक्षे) कृन्तन तालपत्रादिभीरशनानिर्माण । निर्गत. त्रिंशतोऽङ्गुलिभ्यः निस्त्रिंशः तस्य भावः निस्त्रिंशत्व, असिषु पट्टसेषु, न मनस्सु हृद-

परमेवं व्यवस्थितम् । तस्य चाभूदेवंभूतस्य राज्ञो महिषी दिग्गजमदरेखेवानन्दिताळिगणा, पार्वतीव सुकुमारा चन्द्ररेखालंकृता च, वनराजिरिव नवमालिकोद्भासिता सचित्रकानना च, अप्सरस्संहतिरिव संहतसुकेशी समञ्जुघोषा च, सर्वान्तःपुरप्रधानभूता अनङ्गवती नाम । तयोश्च मध्यमोपान्ते वयसि वर्तमानयोः कथमपि दैववशात् त्रिभुवनविलो-

---

येषु (पक्षे) निस्त्रिंशत्वं घातुकत्वं । करवाळानां अर्मानां. नाश , योधेषु युद्धवीरेषु, न जनपदेषु राष्ट्रेषु (पक्षे) करवालनाशः हस्तकेशविनाश । एव इत्थं, व्यवस्थित निष्पन्न । **तस्य चेति** ॥ तस्य राज्ञ. अनङ्गवती नाम महिषी अभूदिति सम्बन्ध । दिग्गजाना दिशादन्तिनां मदरेखेव मदजलधारेव, आनन्दितः आह्लादित आळिगण सर्वालिसमूह. यया सा । (पक्षे) अळिगण भ्रमरसमूह । पार्वती भवानीव, सुकुमारा सौकुमार्यवती, चन्द्रलेखया तदाकारशिरोभूषणविशेषेण अलङ्कृता भूषिता च । (पक्षे) शोभन. कुमार सुब्रह्मण्यः यस्यास्सा । चन्द्ररेखया शशिकलया अलङ्कृता च । वनराजिरिव वनसमूह इव नवया नूतनया मालिकया माल्येन उद्भासिता । सचित्रक सविशेषक आनन मुख यस्यास्सा । (पक्षे) नवमालिकया सप्तलाख्यवीरुधा उद्भासिता भास्वरा, चित्रैः आश्चर्यावहै. काननैः अरण्यैः सहिता च । अप्सरसा देववारवनितानां संहतिरिव समूह इव, संहताः सुश्लिष्टाः शोभनाः केशाः अलकाः यस्यास्सा, मञ्जुघोषेण मनोहरध्वनिना सहिता च । (पक्षे) सुकेशी मञ्जुघोषाचेति अप्सरोविशेषौ । सर्वेषां अन्त पुराणां अवरोधवधूना प्रधानभूता मुख्या । **तयोश्चेति** ॥ तयोः अनङ्गवतीशृङ्गारशेखरयोः । मध्यमोपान्ते वयसि यौवने, पुलोमतन-

भनीयाऽकृतिः, पुलोमतनयेवानन्दितसहस्रनेत्रा, मेरुगिरिमेखलेव सुजातरूपा, शरन्निशेवोल्लसत्तारका, सत्परिषदिवाच्छिद्रद्विजपङ्क्तिभूषिता, राक्षसकुलश्रीरिव माल्यवत्सुकेशशोभिता, तनयाऽभूद्वासवदत्ता नाम ॥ अथ सा रावणभुजवन इवोल्लसितगोत्रे, विन्ध्याचल इव मदनालंकृते, पारावार इव सञ्जातलावण्ये, नन्दनवन इव सदाकल्पशोभिते,

---

या इन्द्राणी सेव, आनन्दितानि स्वसौन्दर्येण आह्लादितानि सहस्र नेत्राणि द्रष्टृजननयनानि यया सा। (पक्षे) आनन्दित. सहस्रनेत्र· इन्द्रः यया सा। मेरुगिरेः मेरुपर्वतस्य मेखलेव कटक इव, सुजात अतिमनोज्ञ रूप सौन्दर्य आकारो वा यस्यास्सा । (पक्षे) सु शोभन जातरूप चामीकर यस्यां सा। शरन्निशेव शरत्कालरात्रिरिव, उल्लसन्त्यौ भासमाने तारके कनीनिके यस्यास्सा (पक्षे) उल्लसन्त्य. तारकाः नक्षत्राणि यस्या। सतां साधूना परिषदिव गोष्ठीव, अच्छिद्राणां नीरन्ध्राणां द्विजानां दन्तानां पङ्क्त्या श्रेण्या भूपिता अलङ्कृता। (पक्षे) अच्छिद्राणा निर्दोषाणां द्विजाना ब्राह्मणानां पङ्क्ति.। राक्षसानां क्रव्यादाना कुलश्रीरिव वंशसपत्तिरिव, माल्यवद्भिः सुकेशैः समीचीनकुन्तलै· शोभिता। (पक्षे) माल्यवान् सुकेशश्चेति राक्षसविशेषौ। **अथेति** ॥ अथ, सा, यौवने तारुण्ये, परिणाम उपयात्यपि, परिणयपराङ्मुखी, तस्थौ इति सम्बन्धः। रावणस्य दशकण्ठस्य भुजवन इव करसमूह इव, उल्लसितगोत्रे उज्ज्वलवंशे (पक्षे) उल्लासितः ऊर्ध्वमुत्क्षिप्तः गोत्रः कैलासाख्यो गिरिः येन । विन्ध्याचल· विन्ध्याख्यः पर्वतः तस्मिन्निव, मदनेन कामेन अलङ्कृते भूषिते (पक्षे) मदनैः तदाख्यैः वृक्षविशेषैः अलंकृते । पारावारः समुद्रः तस्मिन्निव सञ्जात लावण्य सौन्दर्य यस्मिन । (पक्षे) लावण्य लवणभावः । नन्दनवन

पवन इव सुमनोहरे, परिणाममुपयात्यपि यौवने, परिणयपराङ्मुखी तस्थौ। अथैकदा विजृम्भमाणसहकारकोरकनिकुरुम्बनिपतितमधुकरमाला मदकलझङ्कारहुङ्कार जनितपथिकज्वरः, कोमलमलयमारुतोद्धूतचूतप्रसवरसास्वाद कषायकण्ठ कलकण्ठकुहकुहारावभरितसकलदिङ्मुखः, विकचकमलषण्डनिलीयमानमत्तकलहंसकुलकोलाहलमुखरितसरोवरः, परभृतखर-

---

इन्द्रोद्यान तास्मिन्निव, सता समीचीनेन आकल्पेन वेषेण शोभिते । (पक्षे) सदा कल्पैः कल्पवृक्षैः शोभिते । पवन वात तास्मिन्निव, सुमनोहरे सुतरा मनोज्ञे (पक्षे) सुमनसां पुष्पाणां हरे अपहर्तरि । तादृशे यौवने तारुण्ये, परिणाम परिपाक, उपयात्यपि प्राप्नुवत्यपि । परिणये विवाहे पराङ्मुखी अनिच्छु, तस्थौ स्थितवती । **अथेति** ॥ अथ वासवदत्ताया पुष्कलयौवनेऽपि परिणयवैमुख्योत्पत्त्यनन्तर, एकदा जातु, विजृम्भमाणानां उन्मिषतां सहकारकोरकाणा रसालकलिकानां निकुरुम्बे समूहे निपतिताया मधुकरमालायाः भ्रमरपङ्क्तेः मदेन कलः अव्यक्तमधुरः य. झङ्काररूप. हुङ्कारः तर्जनध्वनि. तेन जनितः पथिकानां पान्थाना ज्वरः यस्मिन्। कोमलेन मनोज्ञेन मलयमारुतेन दक्षिणवातेन उद्धतेषु कम्पितेषु चूतप्रसवेषु सहकारकुसुमेषु रसस्य मकरन्दस्य आस्वादेन कषायकण्ठानां रक्तकण्ठध्वनीनां कलकण्ठानां कोकिलाना कुहकुहारावेण भरितानि पूर्णानि सकलदिङ्मुखानि येन स । विकचे विकस्वरे कमलषण्डे निलीयमानस्य मत्तकलहंसकुलस्य कोलाहलेन ध्वनिना मुखरितानि शब्दायमानानि सरोवराणि यस्मिन् स । परभृताना पिकानां खरया

त्रोटिकोटिपाटितपाटलीकुड्मलविवरविनिर्गतमधुधारासारशीकरनिकरसमालब्धदक्षिणसमीरणमारवारणव्रणितपथिकवधूहृदयः, मधुमदमुदितकामिनीमुखकमलगण्डूषशीथुसेवनपुलकितवकुलः, मदनरयपरवशविलासिनीतुलाकोटिविकटचटुलचरणारविन्दप्रहारप्रहृष्टकङ्केलितरुशतः, प्रतिदिनमश्लीलप्रायवैहासिकगीयमानगीतश्रवणोत्सुकषिद्गजनप्रारब्धचर्चरीगीताकर्णनमाद्यदनेकपथिकजनः, दुर्जन इव सतामरसः, दुष्कुल

---

कठिनया त्रोटिकेट्या चञ्च्वग्रेण पाटितानां दलितानां पाटलीकुड्मलाना विवरेभ्यः मध्यरन्ध्रेभ्यः विनिर्गतस्य बहिर्निस्सृतस्य मधुधारासारस्य मकरन्दप्रवाहस्य शीकरनिकरेण कणनिवहेन समालब्धः चर्चितः यः दक्षिणसमीरणः दक्षिणवातः स एव मारवारणः मन्मथवाहनहस्ती तेन व्रणित पथिकवधूहृदय पान्थस्त्रीहृदयं यस्मिन् सः । मधुमदेन मद्यमदेन मुदिताना हृष्टाना कामिनीना सुन्दरीणा मुखकमलगण्डूषशीथुनः वदननिपीतोद्गीर्णासवस्य सेवनेन सम्पर्केण पुलकिताः कोरकिताः वकुलाः केसरा. यस्मिन् सः । ललनामुखकमलशीथुगण्डूषसेकात् वकुला. पुष्प्यन्तीति दोहदरहस्यम् । मदनरयेण कामवेगेन परवशाना पराधीनानां विलासिनीना सुन्दरीणां तुलाकोट्या पादाङ्गदेन विकट चटुल चञ्चल च यत् चरणारविन्दं पादकमल तस्य प्रहारेण ताडनेन प्रहृष्टाना अत्यन्त विकसिताना कङ्केलितरूणां शत यस्मिन् स. । प्रतिदिन दिवसे दिवसे, अश्लीलाः धूर्ताः तत्प्रायै. तत्प्रचुरैः वैहासिकैः नर्मपरैः शृङ्गारिभिः गीयमानस्य गीतस्य श्रवणेन आकर्णनेन उत्सुकैः औत्सुक्ययुक्तैः षिद्गजनैः विटजनैः प्रारब्धायाः वादयितु प्रक्रान्तायाः चर्चर्याः चर्चर्या वा सहितस्य गीतस्य आकर्णनेन माद्यन्तः हृष्यन्त. अनेके पथिकाः यस्मिन् सः । दुर्जन इव,

इव जातिविहीनः, रावण इवापीतलोहितपलाशशतसेव्यमानः, महाश्रृङ्गारीव सुगन्धवाहः, सुराजेव समृद्धकुवलयः. वास्तविक इव वर्धितसुखाशः, सत्कविकाव्यप्रबन्ध इव अनवबद्धतुहिनः, सत्पुरुष इव दोषानुबन्धरहितः. कैवर्त इव बद्धराजीवोत्पलजालः, समृद्धकासारसार्थ इवानन्दि-

---

सता साधूना अरसः (पक्षे) तामरससहितः दुष्कुल इव दुष्टवंशप्रसूत इव. जातिविहीनः (पक्षे) मालतीहीनः। रावणः दशकण्ठ इव, आ ईषत् पीतैः पिङ्गलैः लोहितैः रक्तवर्णैश्च पलाशानां किंशुकानां शतैः, सेव्यमानः आश्रीयमाणः (पक्षे) आपीतं आस्वादितं लोहितं रुधिरं यैस्ते तादृशैः पलाशैः मांसाशिभिः राक्षसैः शतधा सेव्यमानः यद्वा, राक्षसानां शतेन सेव्यमानः। महाश्रृङ्गारीव प्रथितषिङ्ग इव, सुगन्धवाहः शोभनवातयुक्तः। (पक्षे) सुगन्धं समीचीनं स्रक्चन्दनादिसौरभं वहति इति वाहः। सुराजेव सद्भूपतिरिव, समृद्धानि पूर्णानि कुवलयानि नीलोत्पलानि यस्मिन् (पक्षे) समृद्धं सम्पद्युक्तं कुवलयं भूमण्डलं यस्य। वास्तविकः वास्तुनिर्माणपरः स इव, वर्धिताः सु शोभनं ख आशाः दिशश्च येन (पक्षे) वर्धिता अभिवर्धिता सुखाशा सौख्येच्छा येन सः। सत्कवेः महाकवेः, काव्यप्रबन्ध इव, अनवबद्धं अनासञ्जितं तुहिनं हिमं येन सः. (पक्षे) अनवबद्धाः अप्रयुक्ताः तु हि नाः निरर्थकानि केवलपादपूरणार्थान्यक्षराणि यस्मिन् सः। सत्पुरुष इव साधुजन इव, दोषा रात्रिः तदनुबन्धः दैर्घ्यं तद्रहितः (पक्षे) दोषाणां अनुबन्धेन रहितः। कैवर्तः दाश इव, बद्धानि समन्तादुत्पादितानि राजीवानां तामरसानां उत्पलानां कैरवाणां च जालानि समूहाः येन सः, समृद्धः जलेन सम्पूर्णः कासाराणां

तमरुवकः, शक्र इवेन्द्राणीरुचिरः, महाधीर इवाधरीकृतदमनकः, षिद्ग इवाम्लानसुभगः, वसन्तकाल आजगाम ॥ अतिदूरप्रवृद्धेन मधुना जगति को वा न विक्रियेत। यदतिमुक्तो मुनिरपि विचकास। कुसुमशरस्य नवचूतकुसुमबाणमूलनिलीना मधुकरावलिर्विलिखिता नामाक्षरपङ्क्तिरिव रेजे। वृन्तविनिर्गतविकचविचिकिलविवरे कूज-

---

तद्यकाना सार्थ इव समूह इव, आनन्दिताः आह्लादिताः मरुवकाः सुगन्धौषधिविशेषा. येन सः (पक्षे) आनन्दितः मरुदेशबकः येन सः। वबयोरभेदात्। शक्र इव इन्द्र इव, इन्द्राणी निर्गुण्डीलता तया रुचिर. मनोज्ञ. (पक्षे) इन्द्राण्याः शच्याः रुचि अभिलाष राति ददातीति रुचिरः। महाधीर इव अतिशूर इव, अधरीकृताः दमनका. वीरुद्विशेषाः येन (पक्षे) अधरीकृताः न्यक्कृताः दमनकाः शत्रवः येन। षिद्ग विटः स इव, अम्लानो वृक्षविशेषः तस्य तेन वा सुभगः (पक्षे) अम्लानः हर्षयुक्त. सुभगश्च। एवभूतः वसन्तकाल., आजगाम। **अतीति** ॥ अतिदूरप्रवृद्धेन अत्यन्तमभिवृद्धिमासादितेन, मधुना वसन्तेन, जगति भुवने, को वा, न विक्रियेत विकार न प्राप्येत। यत यस्मात् कारणात् अतिमुक्त. सस्तेरात्यान्तिकतया मुक्तः, मुनिः मननशीलो ऋषिरपि, विचकास हृष्टवान् कामरागयुक्तोऽभूत्। (पक्षे) अतिमुक्तः माधवी, मुनिः अगस्त्यवृक्षः। नवानि प्रत्यग्राणि चूतानि रसालकुसुमान्येव बाणाः शराः तेषां मूले निलीना अनुषक्ता मधुकरावलिः भ्रमरमाला, कुसुमशरस्य मदनस्य, नामाक्षरपङ्क्तिरिव अभिधानवर्णविन्यासरेखेव, रेजे बभौ। वृन्तात् प्रसवबन्धनात विनिर्गतस्य बहिरुद्गतस्य विकचस्य

न्मधुकरो मकरकेतोः त्रिभुवनविजयशङ्खध्वनिमिव चकार। नवयावकपङ्कपल्लवितवरनूपुररणितरमणीयतरुणीचरणप्रहारानुरागवशान्नवकिसलयच्छलेन तमेव रागमुदवहदशोकः । मधुरमधुपूरितकामिनीमुखकमलगण्डूषसङ्गादिव तद्रसगन्धमात्मकुसुमेषु बिभ्रद्बकुलतरू रराज। अन्तरान्तरा निपतितमधुकरनिकरकिम्मीरः कङ्केळिगुच्छोऽर्धनिर्वाणमनोभवचिताचक्रानुकारी पथिकजनचित्तदाहमुवाह । विकचविचिकि-

---

विकस्वरस्य विचिकिलस्य मल्लिकाया विवरे, कूजन् अव्यक्त ध्वनन, मधुकरः भ्रमरः, मकरकेतोः मदनस्य, त्रिलोकविजयशङ्खध्वनि, चकारेवेत्युत्प्रेक्षा । नवेन यावकपङ्केन लाक्षारसकर्दमेन पल्लवितस्य सञ्जातपल्लवस्य अलक्तकस्येति यावत्। वरनूपुरेण उत्कृष्टमञ्जीरेण रणितस्य सशब्दस्य, यद्वा वर उत्कृष्ट नूपुररणित यस्मिन्सः, तादृशस्य रमणीयस्य मनोज्ञस्य तरुणीचरणस्य युवतिचरणस्य प्रहारे ताडने अनुरागवशात् प्रेमाधीनत्वाद्धेतोः, अशोकः कङ्केळिवृक्षः, नवकिसलयच्छलेन नूतनपल्लवव्याजेन, तमेव राग रक्तिमाण, उदवहत् अधरत्। अपह्नुतिगर्भा उत्प्रेक्षा । वकुळतरुः केसरवृक्षः, मधुरेण मधुना आसवेन पूरितस्य कामिनीमुखकमलस्य य गण्डूषः तत्सङ्गात् सम्बन्धादिव, तद्रसगन्ध आसवसौरभ कुसुमेषु पुष्पेषु, बिभ्रत् धरन् सन्, रराज दिदीपे । अन्तरान्तरा मध्ये मध्ये निपतितेन मधुकरनिकरेण भ्रमरकदम्बकेन किम्मीरः शबलः कङ्केळिगुच्छः अशोककुसुमस्तबकः, अर्धे मध्ये निर्वाण शान्ताग्निक यत् मनोभवस्य मदनस्य चिताचक्र काष्ठविरचित प्रेतशयन तदनुकारी तत्तुल्यस्सन्, पथिकजनानां पान्थानां, चित्तदाह मनस्सन्ताप, उवाह बिभरांबभूव । अ-

लराजिरलिकुलशबला कलितेन्द्रनीला मुक्तावळीव मधुश्रियो विरुरुचे । विरहिणां हृदयमथनाय कुसुमशरस्य शाणचक्रमिव नागकेसरकुसुममशोभत । पथिकजनहृदयमत्स्यं ग्रहीतुं मकरकेतोः जालावलीव पाटलीकुसुममदृश्यत । कन्दर्पकेळिलम्पटलाटीललाटतटलुलितालकधम्मिल्लभारकुसुमपरिमलसमृद्धमधुरिमगुणः, कामकलाकलापनिपुणकर्णाटसुन्दरीसुन्दरस्तनकलशयुगळघुसृणधूळिपटलपरिमलामोदवाही रणरणकरसितापरान्तकान्ताकुन्तलोल्लसितसंक्रान्तपरिमळ—

लिकुलैः भ्रमरपटलैः शबला मिश्रा, विकचानां विकस्वराणां विचिकिलाना मल्लिकानां राजिः श्रेणिः, कलितेन्द्रनीला घटितेन्द्रनीलरत्ना, मधुश्रियः वसन्तलक्ष्म्याः, मुक्तावलीव मौक्तिकसर इव, विरुरुचे शुशुभे । विरहिणा वियोगिना हृदयस्य चित्तस्य मथनाय विलोडनाय घर्षणाय वा । कुसुमशरस्य मन्मथस्य शाणचक्रमिव निकषोपलचक्रमिव, नागकेसरकुसुम, अशोभत । पाटलीकुसुमन्तु, पथिकजनानां पान्थाना हृदयान्येव मत्स्याः तान् ग्रहीतुं स्ववशीकर्तुं (प्रसारिता) मकरकेतोः मदनस्य जालावलीव आनायश्रेणीव, अदृश्यत । **कन्दर्पेति** ॥ कन्दर्पकेळ्यां मदनविलासे लम्पटाना अत्यासक्ताना लाटीना लाटदेशस्त्रीणां ललाटतटेषु अळिकदेशेषु लुलितः विशीर्णः यः अलकधम्मिल्लभारः सयतकुन्तलसमूहः तस्य परिमळेन समृद्धः सम्पूर्णः मधुरिमगुण माधुर्यसम्पत्तिः यस्य सः। कामकलाना मान्मथविद्यानां कलापे समुदाये निपुणाः समर्थाः याः कर्णाटसुन्दर्य. तासां सुन्दर मनोज्ञं यत् स्तनकलशयुगळ कुचयुग्म तत्स्थ यत् घुसृणधूळीपटल कुङ्कुमपरागनिकुरुम्ब तत्सौरभवाही। रणरणकेन उत्कण्ठया लसितानां प्रकाशमाना-

मिळिताळिमालामधुरझङ्काररवमुखरितनभस्स्थलः, नवयौवनोद्धतकेरळीकपोलपाळीपत्रावळीपरिचयचतुरः, चतुष्षष्टिकलाकलापविदग्धमुग्धमुखरमालवीनितम्बबिम्बसंवाहनसुभगः, सुरतपरिश्रमपरवशान्ध्रपुरन्ध्रीनीरन्ध्रपीनपयोधरभारनिदाघजलकणनिकरशिशिरः, मलयमारुतो ववौ । अत्रान्तरे वासवदत्तासखीजनात् विदितसुताभिप्रायः शृङ्गारशेखरस्स्वसु-

---

ना अपरान्तकान्तानां पश्चिमदिगन्तजाना स्त्रीणां कुन्तलेषु चिकुरेषु उल्लसितः भासमानः सकान्तः सम्बद्धश्च य: परिमळः सौरभं तदर्थं मिळितानां सङ्घीभूतानां अळिमालाना भ्रमरपङ्क्तीना मधुरेण मनोज्ञेन झङ्कारेण ध्वनिना मुखरित नादितं नभस्स्थल आकाश येन स । नवयौवनेन प्रत्यग्रतारुण्येन उद्धतानां दृप्ताना केरळीना केरळदेशस्त्रीणां कपोलपालीषु गण्डमण्डलेषु स्थिताया पत्त्रावल्याः मकरिकारचनाया परिचये चतुरः चातुर्यशाली, चतुष्षष्टिकलाः गीतवादित्राद्याः तासा कलापे समुदाये विदग्धानां चतुराणा मुग्धमुखीनां सुन्दरमुखीना मालवीना मालवदेशस्त्रीणां नितम्बबिम्बाना संवाहनेन सुभग मनोहरः । सुरतपरिश्रमेण रतिखेदेन परवशानां विवशाना आन्ध्रपुरन्ध्रीणा आन्ध्रदेशीयसुन्दरीणां नीरन्ध्रयोः निबिडयो. पीनयोः पृथुलयोश्च पयोधरयोः स्तनयोः भारे विद्यमानः य निदाघजलनिकरः स्वेदोदबिन्दुसमूह तेन शिशिर शीतलः, मलयमारुतः दक्षिणानिल , ववौ वाति स्म । "वा गतिगन्धनयोः" लिटि रूपम् । अत्रान्तरे एतस्मिन् समये, वासवदत्तायः सखीजनात् वयस्यायाः विदित.ज्ञातः सुतायाः दुहितुः अभिप्रायः आशयः येन सः, शृङ्गारशेखरः,

तायाः स्वयंवरार्थमशेषधरातलभाजां राजपुत्राणामेकत्र मेळनमकरोत्। ततो दग्धकृष्णागुरुधूपपरिमलामोदमोहितमधुकरमालाबहुळघुमुघुमायितरवमुखरितदिगन्तरं, अतिरभसहासच्छटादीधितिधवळिमपरिमिळितं, अनेकपरिहासकथालापविदग्धशृङ्गारमयजननिचयसमाकुलं, दह्यमानमहिषाक्षादिसुगन्धद्रव्यसौरभाकृष्टपुरोपवनषट्पदकुलाकुलं, अर्जुनसमरमिव नन्दिघोषमुखरितदिगन्तरं, नृपास्थानमिव

स्वसुतायाः निजकन्यकायाः, स्वयवरार्थं स्वयवरविवाहाय, एकत्र एकस्मिन् देशे, अशेष समग्र धरातल भूमण्डल भजन्ति आश्रयन्तीति भाजः तेषां, राजकुमाराणां, मेळन सयोजन सभामिति यावत, अकरोत कृतवान्। **तत इति** ॥ दग्धस्य वह्निना समुद्दीपितस्य कृष्णागुरोः कालागुरोः यः धूप. ससौरभो धूमः तस्य परिमळामोदेन वासनाधिक्येन मोहिताना भ्रमरमालाना अळिसमूहाना बहुळघुमुघुमायितरवेण प्रचुराव्यक्तशब्देन मुखरितानि सशब्दतामापादितानि दिगन्तराणि दिङ्मध्यानि येन तत्। अतिरभसाः अतिवेगाः याः हासच्छटाः हासपरम्पराः आमोद. परिमळश्च तैं परिमिळित सहित, अनेकाः विविधा. याः परिहासकथाः तासा आलापेषु विदग्धेन चतुरेण शृङ्गारमयजननिचयेन विलासिजनसमूहेन समाकुल व्याप्त, दह्यमानाना महिषाक्षादीनां गुग्गुलुप्रभृतीनां सुगन्धद्रव्याणां सुरभिळवस्तूना सौरभेण आकृष्टैः बलादानीतैः पुरोपवनषट्पदकुलैः नगरारामभ्रमरमालाभिः आकुल व्याप्त, अर्जुनः पार्थः तस्य युद्धमिव नन्दिघोषेण वन्दिना स्तुतिरवेण मुखरितदिगन्तर, (पक्षे) नन्दिघोषः इति अर्जुनरथस्य नाम। नृपस्य राज्ञः आस्थानमिव, राजोपहारेण राजोपायनद्रव्येण सहितं, नाप-

सराजोपहारं, तापसाश्रममिव वितानोद्भासितं, त्रिविष्टपमिव सुमनोऽलंकृतं, मञ्चमारुरोह वरारोहा वासवदत्ता। अत्र केचित्कुलांकुरा इव विजितनगरमण्डनाः, अपरे पाण्डवा इव सदिव्यचक्षुषः कृष्णागुरुपरिमिळिताश्च, अन्ये शरद्दिवसा इव दूरप्रवृद्धाशाः, इतरे प्रहर्तुमुद्यता इव स्वबलार्थिनः, केचिद्व्याधा इव शकुनश्रावकाः, केचिदाखेटकासक्ता इव

---

साश्रममिव, वितानेन उल्लोचेन (पक्षे) यागेन, उद्भासित दीप्त, त्रिविष्टपमिव स्वर्ग इव, सुमनोभि., पुष्पै. (पक्षे) देवै., अलंकृत भूषितं, मञ्चं स्वयवरसभामण्टपम्। (कर्म) वर उत्कृष्टः आरोह. जघन यस्यास्सा, तादृशी, वासवदत्ता, आरुरोह । **तत्रेति** । तत्र समाजे, केचित्, कुलाङ्कुरा इव कर्णीसुता इव । 'कर्णीसुत करवटो मूलदेवः कुलाङ्कुर.।' इति कोशः। विजिता (कामशास्त्रकलाभिज्ञतया) निर्जिताः नगरमण्डनाः वेश्याः यैस्ते । 'रूपाजीवा तु गणिका वारस्त्री पुरमण्डना।' इति हारावली । (पक्षे) विजित नगरस्य मण्डन भूषण यैस्ते । (सर्वोत्कृष्टभूषणधरणादिति भाव.। पाण्डवा इव पाण्डुपुत्रा इव, दिव्यचक्षु. अर्जुन. कृष्णश्च (पक्षे) सुगन्धद्रव्यविशेष. तत्सहिताः । "दिव्यचक्षुर्ज्यौतिषिके पार्थात्मज्ञानिनोरपि ।" दिव्यचक्षुस्सुनयने कृष्णेऽन्धे सिहकेऽपि च ।' इति धरणिः । कृष्णा द्रौपदी गुरु. द्रुपदः धौम्याचार्यो वा ताभ्यां परिमिलिताः सङ्गताः, (पक्षे) कृष्णागुरु कालागुरु.। अन्ये अपरे, शरद्दिवसा इव शरद्दिनानीव, दूर प्रवृद्धा.·मेघोपरोधाद्यभावेन दैर्घ्यमासादिता. आशाः काष्ठा. येषु (पक्षे) आशा वाञ्छा । इतरे अन्ये, प्रहर्तु शत्रूनभिहन्तु, उद्यता इव उद्युक्ता इव, स्वबल निजसैन्य अर्थयन्ते वाञ्छन्तीति स्व--नः (पक्षे) शोभनां अबलां

रूपानुसारप्रवृत्ताः, केचिज्जैमिनिमतानुसारिण इव तथागतध्वंसिनः, केचित् खञ्जना इव सांवत्सरिकफलदर्शिनः, केचित् सुमेरुपरिसरा इव कार्तस्वरमयाः, केचित्कुमुदाकरा इव भास्वद्दर्शनमीलिताः, केचिद्धार्तराष्ट्रा इव विश्वरूपाव-

---

अर्थयन्ते इति तादृशाः । केचित् व्याधा इव मृगयव इव, पक्षिश्रावकाः पक्षिवञ्चनार्थं स्वकीयदीपकपक्षिणः श्रावयन्त इत्यर्थः । (पक्षे) इयं वासवदत्ता मम पत्नी भवेद्वा न वेति निमित्तश्रवणोद्यताः, केचित् आखेटक मृगया तत्र आसक्ता इव, रूपानुसारे मृगानुसरणे प्रवृत्ताः (पक्षे) रूप सौन्दर्यं तदनुसारेण प्रवृत्ताः स्वसौन्दर्यानुगुणप्रवृत्तिमन्तः (यद्वा) रूपं वासवदत्तासौन्दर्यं तदनुसारेण प्रवृत्ता । जैमिनिः कर्ममीमांसासूत्रकृत् । तत्सिद्धान्तानुवर्तिन इव, तथागता बौद्धाः तान् ध्वंसितुं शीलं येषां ते । (मतध्वंसिनः इत्यपि पाठः) अर्थस्तु तथागतमतं बुद्धमतं । (पक्षे) तथागतं तथाभूतं कार्यं ध्वंसयन्ति इति तथा । अवश्यकरणीयमपि कार्यं न पश्यन्तीति भावः । यद्वा स्ववेषतुल्यवेषमादायागताः तथाऽऽगता. तान् ध्वंसयन्तीति वा । खञ्जना खञ्जरीटा इव, संवत्सरे भवं सांवत्सरिकं फलं शुभाशुभात्मकं दर्शयन्ति पुर एव सूचयन्तीति दर्शिनः । (पक्षे) सांवत्सरिकाः ज्यौतिषिकाः तैरुच्यमानं फलं वासवदत्तास्वरूपस्त्रीरत्नलाभात्मकं पश्यन्ति उत्प्रेक्षन्ते इति तथा । सुमेरुः हेमाद्रिः तस्य परिसरा इव प्रान्तदेशा इव, कार्तस्वरमयाः स्वर्णमयाः (पक्षे) कुत्सितः आर्तस्वरः (वासवदत्ताऽलाभनिबन्धनः दीनस्वरः तन्मयाः) कुमुदाकरा कैरवाकरा इव, भास्वतः सूर्यस्य दर्शनेन अवलोकनेन मीलिताः सङ्कुचिताः (पक्षे) भास्वान् दीप्तिभाक् पुरुषः तद्दर्शनेन मीलिताः सौन्दर्येणाभ्यधिकं इममुज्झित्वा न मां वासवदत्ता वृणुयादिति धिया दुःखभाज इत्यर्थः । धार्तराष्ट्राः धृ-

लोकनजनितेन्द्रजालाद्भुतप्रत्ययाः, केचिदात्मनि वारणबुध्या बलवन्तोऽपि सुवाहाः, केचित्पाणिग्रहणार्थिनोऽपि असुकरम्मन्यमानाः, केचिदधरीकृता अपि स्थिराः, केचित्पाण्डुपुत्रा इवाक्षहृदयाज्ञानहृतक्षमाः, केचिद् बृहत्कथानुसारिण इव

---

तराष्ट्रसूनव दुर्योधनादयः त इव, विश्वरूपस्य कृष्णेन भगवता प्रकटितस्य विश्वरूपस्य अवलोकनेन दर्शनेन जनितः इन्द्रजाल माया तस्या अद्भुत आश्चर्यमिति प्रत्यय. ज्ञान येषा ते, "सन्धित्सया युधिष्ठिरसकाशात् दुर्योधनभवन दूत्येन समागतं श्रीकृष्णपरमात्मान मूढः पाशेनारभत बन्धुं दुर्योधन· । तदा श्रीकृष्णेन प्रकटित विश्वरूप दृष्ट्वाऽपि अहो मायाविनो मायाप्रपञ्चः इति दुर्योधनो भगवन्त परिजहाम्, न व्यश्वमी" दिति भारतकथा । (पक्षे) विः पक्षी श्वा कुक्कुरः रूपं मृग. एतेषा निमित्तविशेषाणा अवलोकनेन जनित इन्द्रदारा. शची (दजयोः रलयोश्चाभेद उदीच्यानाम्) तस्या अद्भुतप्रत्ययः निश्चयो येषां ते तथा । स्वयवरे कलहायमानान् शची नाशयतीति प्रथा । तथा च रघुवंशे । 'सान्निध्ययोगात् किल तत्र शच्या स्वयवरक्षोभकृतामभाव ' इति कालिदासः । केचित्, आत्मनि स्वस्मिन् वारणबुद्ध्या गजबुद्ध्या, बलवन्तोऽपि, सुवाहाः शोभनाश्वाः, (वबयोरभेद) वारणबुद्ध्या बलवता शोभनाश्वत्व विरुद्ध । पाणिग्रहण हस्तग्रहण तदर्थिनोऽपि, सुष्ठु करं न मन्यमाना इति विरोधः । (पक्षे) पाणिग्रहण वासवदत्ताविवाहः तदर्थिनः प्रार्थयमानाः असुकर दुष्करं मन्यमानाश्च । अधरीकृता अपि धरा भू· अधराः धराः सम्पद्यमानाः कृताः धरीकृताः तादृशा·अपि स्थिराः भुवः इति विरोध· । अपृथ्वीकृतस्य पृथ्वीत्व विरुद्ध । (पक्षे) न्यक्कृता·, निश्चलाश्च । पाण्डुपुत्रा इव, अक्षहृदयं द्यूततत्वं तस्य अज्ञानेन हृता अपहृता क्षमा भूमिः येभ्यस्ते (पक्षे) अक्ष इन्द्रिय हृ-

गुणाढ्याः, केचित्तिर्यग्गतय इव सुगन्धवाहाः, केचित्कौरवसैनिका इव द्रोणशास्त्रसूचकाः, केचित्कैरवाकरा इवासोढसूरभासः, क्षणमेवं स्थिता राजपुत्राः । सा च क्षणेनैतानेकैकशस्समालोक्य विरक्तहृदया सती तस्मात्कर्णीरथादवततार । अथ तस्यामेव रात्रौ वालिनमिवाङ्गदोपशोभितं, कुहूमुखमिव

---

दय चित्त तयोर्ज्ञानेन हृता क्षमा क्षान्तिः येषा ते तथा । बृहत्कथा पैशाचभाषामयः कथाप्रबन्धविशेषः तदनुसारिणः तन्निबन्धार इव, गुणाढ्याः । बृहत्कथाग्रन्थकर्ता गुणाढ्यः । (पक्षे) बहुकथावक्तारः, गुणैः मन्त्र्यादिभि धैर्यादिभिर्वा आढ्याः पूर्णाः । तिर्यग्गतय इव वाता इव, सुगन्धवाहाः सुरभिगन्धवहनशीलाः । (पक्षे) वक्रगतयः । परिमलयुक्ताश्च । कौरवस्य सुयोधनस्य सैनिका इव, द्रोणः भारद्वाजः तस्य शास्त्र शस्त्रसमूहः शासन वा तत्सूचकाः तत्प्रकटकाः । (पक्षे) द्रोणाः काका भरद्वाजा वा, तेषां शास्त्र पक्षिशास्त्रामित्यर्थः । कैरवाणां कुमुदाना आकरा इव, असोढा सूरभास सूर्यप्रकाशा यैस्ते (पक्षे) शसयोरभेदात् शूराणा भाः दीप्तिः असोढा यै । एवं राजपुत्राः क्षण निमिषमात्र, स्थिताः स्थितवन्तः । **अथेति** ॥ सा विरक्तहृदय अननुरक्तहृदया सती, तस्मात् कर्णीरथात् स्वयवरमण्टपात्, अवरुरोह 'कर्णीरथः प्रवहणे मञ्चे राज्ञां स्वयवरे ।' इति कोशः । **अथेति** । अथ तस्यामेव रात्रौ सा कञ्चिद्युवानं ददर्श । इति सम्बन्धः । कीदृशमित्यत आह । वालिनमित्यादिना । वाली वानराधिपतिः इन्द्रसूनुः तमिव अङ्गदेन तन्नाम्ना पुत्रेण (पक्षे) भुजवलयेन उपशोभितम् । कुहूमुख कोकिलः तमिव हारिकण्ठ मनोहरस्वरः (पक्षे

हारिकण्ठं, कनकमृगमिव रामाकर्षणनिपुणं, जयन्तमिव वचनामृतानन्दितवृद्धश्रवसं, कृष्णमिव कंसहर्षं न कुर्वन्तं, महामेघमिव विलसत्करकं, समुद्रमिव महासत्वतेजोयुक्तं, मालिन्या कबरिकया, तुङ्गभद्रया नासिकया, शोणेन अधरेण, नर्मदया वाचा, गोदया भुजया, स्वर्वाहिन्या कीर्त्या च पुण्यसरिन्मयमिव, आदिकन्दं शृङ्गारपादपस्य, रोहणगिरिं सकलगुणर-

---

हारयुक्तश्च । कनकमृगमिव मारीचरूपहेमहरिणमिव रामस्य राघवस्य आकर्षणे दूरतः अपनयने निपुण समर्थ । (पक्षे) रामाया स्त्रियाः आकर्षणे निपुण । जयन्तः इन्द्रपुत्रः तमिव, वचनामृतेन मधुरवचनेन आनन्दितः वृद्धश्रवाः इन्द्रः येन । (पक्षे) वृद्धाना पण्डितानां श्रवांसि श्रवणानि । कृष्ण शौरिः तमिव, कंसस्य औग्रसेने· हर्षं तुष्टि न कुर्वन्तं (पक्षे) क वा जन सहर्ष न कुर्वन्त । सर्वमेव हर्षयुक्त कुर्वन्तमित्यर्थः । महामेघ· महाजलधर. तमिव, विलसन्तः करकाः वर्षोपलाः यस्मिंस्त । (पक्षे) विलसन्तौ प्रकाशमानौ करौ बाहू यस्य त । समुद्रः उदधिः तमिव, महासत्वानि अतिप्रमाणाः ग्राहतिमिङ्गिलाद्या जलजन्तव , तेजः बडवाग्निः तद्युक्तं । (पक्षे) सत्व पराक्रमः, तेज· पौरुष च । मालिनी नाम काचिन्नदी तया मालायुक्तया च, कबरिकया केशबन्धनविशेषेण, तुङ्गभद्रया नद्या तुङ्गया उन्नतया भद्रया मङ्गलकर्या च, नासिकया, शोणः तन्नामा कश्चन नदः तेन, अरुणेन च, अधरेण रदनच्छदेन, नर्मदा काचन नदी तया, क्रीडाप्रदया च, वाचा वाण्या, गोदा गोदावरी तया गां भूमिं ददातीति गोदा तया, भुजया बाहुना, स्वर्वाहिनी गङ्गा स्वः स्वर्गे वहनशीलया च, कीर्त्या च, पुण्यसरिन्मयमिव पावननदीस्वरूपमिव, शृङ्गारः रसराज· तद्रूपस्य पादपस्य वृक्षस्य आदिकन्द मूलकन्दं,

त्नसमूहस्य, प्रभवशैलं सुन्दरकन्दर्पकथानदीनां, सुरभिमासं वैदग्ध्यसहकारस्य, आदर्शतलं सौन्दर्यस्य, प्रथममूलं विद्यालतानां, स्वयंवरपतिं सरस्वत्याः, स्पर्धागृहं कीर्तिलक्ष्म्योः, मूलगृहं शीलसम्पदां, कोशगृहं महासौन्दर्यधनस्य, त्रिभुवनरमणीयाकृतिं कंचिद्युवानं, ददर्श । स चिन्तामणिनाम्नो राज्ञस्तनयः कन्दर्पकेतुरिति स्वप्न एव तन्नामादिकमश्रृणोत् । अनन्तरमहो प्रजापतेरूपनिर्माणकौशलं । मन्ये स्वस्यैव नैपुण्यस्यैकत्र दर्शनोत्सुकमनसा वेधसा जगत्त्रयसमवायरूपपरमाणूनादाय

---

सकलाना समग्राणा गुणरूपाणा रत्नाना समूहस्य रोहणगिरिमिव खनिपर्वतमिव, सुन्दर्यः मनोज्ञाः कन्दर्पकथा मन्मथकथा एव नद्य तासां प्रभवशैल उत्पादकगिरि, वैदग्ध्य चातुर्य तद्रूपस्य सहकारस्य रसालस्य, सुरभिमास वसन्तमासं, सौन्दर्यस्य लावण्यस्य, आदर्शतल मुकुरतल, विद्या एव लता वीरुधः तासा, प्रथममूल आदिमम्मूल । सरस्वत्या· वाण्याः, स्वयवरपतिं स्वयवरे वृत भर्तार । कीर्तिलक्ष्म्यो· यशश्श्रियो, स्पर्धागृह स्पर्धया स्वीकृत गेह, शील सद्वृत्त तद्रूपसम्पदा श्रिया, मूलगृह प्रधानगृह, महासौन्दर्य अमित लावण्य तद्रूपस्य धनस्य, कोशगृह भाण्डागार, त्रिभुवनरमणीयाकृति त्रिलोकमहनीयविग्रह कञ्चित्, युवान तरुण, ददर्श दृष्टवती । **स इति** ॥ स्पष्टम् । **अनन्तरमिति** । अहो इत्याश्चर्ये । प्रजापतेः ब्रह्मणः, निर्माणकौशल सृष्टिचातुर्य । स्वस्य आत्मन., नैपुण्यस्य सामर्थ्यस्य, एकत्र एकस्मिन् स्थले, दर्शने उत्सुक साभिलाष मनः यस्य तेन, वेधसा ब्रह्मणा, जगत्त्रयसमवायस्य लोकत्रयसमष्ट्याः ये रूपपरमाणवः सौन्दर्यसूक्ष्मकणा· तान्, आदाय गृहीत्वा,

विरचितोऽयमिति । अन्यथा कथमिवास्य कान्तिविशेष ईदृशो भवति । वृथैव दमयन्ती नलस्य कृते वने वैशसमवाप । मुधैवेन्दुमती महिष्यप्यजानुरागिणी बभूव। विफलमेव दुष्यन्तस्य कृते दुर्वाससश्शापमनुबभूव शकुन्तला । निरर्थकमेव मदनमञ्जुका नरवाहनदत्तं चकमे । निष्कारणमेव मेरुगिरिनितम्बे ऊरुगरिमनिर्जितरम्भा रम्भा नळकूबरमचीकमत । व्यर्थमेव धूमोर्णा स्वयं स्वयंवरार्थमागतेषु देवगणेषु

---

अय, विरचितः निर्मितः इति । अन्यथा एवं न चेत्, अस्य पुसः । **वृथैवेत्यादि** ॥ दमयन्ती भैमी, नलस्य कृते नैषधाय, नलः तृणविशेषः तदर्थ इत्यपि । वने, वैशस दुःख, आप । इन्दुमती विदर्भराजपुत्री, महिषस्य स्त्री महिष्यपि, अजः छागः तदनुरागिणी, बभूव । महिषस्त्रियः अजानुरागो विरुध्यते । (पक्षे) कृताभिषेका, अजः इक्ष्वाकुवंश्यो राजा तस्मिन्ननुरागिणी । शकुन्तला विश्वामित्रान्मेनकायामुत्पन्ना कण्वेन वर्धिता काचन कन्या, दुष्यन्त. चन्द्रवंशोद्भवः राजर्षिः तस्य कृते दुर्वाससः तदाख्यस्य महर्षेः, शाप अभिज्ञानाभरणदर्शनावधिकं स्वभर्त्रा प्राक्तनस्वकीयपरिणयादिवृत्तान्तविस्मरणात्मक वैशस, अनुबभूव । मदनमञ्जुका तन्नाम्नी काचन राजर्षिकन्यका सा, नरवाहनदत्तः कौशाम्बीवास्तव्यः वत्सेश्वरसुतो राजा, त, चकमे कामयामास । ऊर्वोः सक्थ्नोः गरिम्णा वर्तुलत्वफाळफळ्यादिनिबन्धनगौरवेण निर्जिता न्यक्कृता रम्भा कदळीस्तम्भः यया सा, तादृशी, रम्भा तन्नाम्नी देवगणिका, मेरुगिरेः सुमेरुपर्वतस्य नितम्बे कटके, नलकूबरं कुबेरसूनु, निष्कारणमेव निर्हेतुकमेव, अचीकमत । धूमोर्णाऽपि, स्वयंवरार्थं, आगतेषु देवेषु

धर्मराजमाचकाङ्क्ष ॥ ऋद्धिस्तु निष्प्रयोजनमेव गन्धर्वयक्षेषु कुबेरमाससाद । अहेतुकमेव पुलोमतनया देवेन्द्रासक्तचित्ता बभूव । इति बहुविधं चिन्तयित्वा विरहमुर्मुराग्निमद्ध्यमधिरूढेव, मदनदावाग्निशिखाकबळितेव, वसन्तकालाग्निशिखागृहीतेव, दक्षिणमारुतरुद्रपावकग्रस्तेव, उन्मादपातालगृहं प्रविष्टेव, शून्यकरणग्रामेव, वर्तमाना, हृदये विलिखितमिव, उत्कीर्णमिव, प्रत्युप्तमिव, कीलितमिव, निगळितमिव, वज्रसारघटितमिव, अस्थिपञ्जरप्रविष्टमिव, मज्जा-

(निर्धारणसप्तम्यन्तमेतत्) धर्मराज यम आचकाङ्क्ष भर्तारमैच्छत् । ऋद्धिः तन्नाम्नी यक्षी, कुबेर धनद, कुत्सितशरीरयुक्तमिति च, तस्य एकेन अक्ष्णा काणत्वात् । पुलोमतनया इन्द्राणी, अहेतुकमेव निर्निमित्तमेव, देवेन्द्रे महेन्द्रे, आसक्तचित्ता सक्तमनाः, बभूव । **इतीति** । इति इत्थ, बहुधा नानाप्रकारेण, चिन्तयित्वा आलोच्य, विरहः दयितविश्लेष एव मुर्मुराग्निः तुषाग्निः तन्मद्ध्य, अधिरूढेव आरूढवतीव, मदनः मारः स एव दावाग्निः वनदहनः तस्य शिखया ज्वालया कबळितेव भक्षितेव, कालाग्निः संवर्तानलः । दक्षिणमारुतः मलयवातः स एव रुद्रपावकः ईश्वरनेत्राग्निः तेन ग्रस्तेव निर्गार्णेव, उन्मादः चित्तविभ्रमः स एव पातालगृह अतलभवन तत् प्रविष्टेव, शून्य. व्यापाररहितः करणानां इन्द्रियाणां ग्रामः समूहः यस्यास्सा तादृशीव, वर्तमाना, हृदये चित्ते, विलिखित रेखया रचित, उत्कीर्ण प्रतिमारूपेण चित्रित, प्रत्युप्त उट्टङ्कित, कीलित निखात, निगलित श्रृङ्खलया नियमित, वज्रसारः वज्रलेपः तेन घटित सयोजित, अस्थिपञ्जरे पञ्जराकारेषु शारीरकीकसेषु, प्रविष्टमिव निविष्टमिव,° मज्जार-

रसशबलितमिव, मर्मान्तरस्थितमिव, प्राणपरीतमिव, अन्तरात्मानमधिष्ठितमिव, रुधिराशये द्रवीभूतमिव, पललसंविभक्तमिव, कन्दर्पकेतुं, मन्यमाना, उन्मत्तेव, अन्धेव, बधिरेव, मूकेव, शून्येव, निरस्तेन्द्रियग्रामेव, मूर्च्छागृहीतेव, ग्रहग्रस्तेव, यौवनसागरतरलतरङ्गपरम्परापरीतेव, रागरज्जुभिः परिवारितेव, कन्दर्पकुसुमबाणैः कीलितेव, शृङ्गारभावनाविषरसघूर्णितेव, रूपपरिभावनाशल्यकीलितेव, मलयानिलापहृतजीवितेव, भवन्ती, सा, हा प्रिये, सख्यनङ्गलेखे, वितर हृदये मे पाणिपद्मं, दुस्सहोऽयं विरहसन्तापः, मुग्धे

---

सेन शबलितमिव मिश्रमिव, मर्म प्राणनाडी तस्य अन्तरे मध्ये स्थितमिव, प्राणेन प्राणवायुना परीतमिव समन्तात्परिवृतमिव, अन्तरात्मान स्वकीयं मनः अधिष्ठितमिव आश्रितमिव, रुधिराशये रक्ताशये द्रवीभूतमिव विलीनमिव, पललेन मांसेन सह सविभक्तमिव, कन्दर्पकेतु मन्यमाना, उन्मत्ता चित्तभ्रमवती, अन्धा चक्षुर्हीना, बधिरा श्रवणेन्द्रियविकला, मूका वाग्विकला, शून्येव निर्विषयेव, मूर्च्छा कश्मल, ग्रहाः पिशाचाः, यौवन तारुण्यमेव सागरः समुद्रः । रागः अनुराग एव रज्जुः शुल्व, कीलिता अन्तर्निखाता, शृङ्गारभावनैव विषरसः गरलं तेन घूर्णितेव भ्रमितेव, रूपस्य कन्दर्पकेतुसौन्दर्यस्य परिभावना चिन्तना तयैव शल्येन शङ्कुना कीलितेव, मलयानिलः दक्षिणवातः तेन अपहृतजीवितेव, भवन्ती, सा वासवदत्ता, हा इति खेदे । हृदये मद्वक्षसि पाणिपद्म करसरसिज, वितर निक्षिप । विरहसन्तापः विश्लेषवेदना, दुस्सहः सोढु अशक्यः । मुग्धे

मदनमञ्जरि, सिञ्चाङ्गानि चन्दनवारिणा, सरळे वसन्तसेने, संवृणु केशपाशं, तरळे तरङ्गवति, वितराङ्गेषु कैतकधूळिं, वामे मदनमालिनि, वीजय शैवालकलापेन, चपले चित्रलेखे, चित्रपटे विलिख चित्तचोरं जनं, भामिनि विलासवति, विक्षिपावयवेषु मुक्ताचूर्णनिकरं, रागिणि रागलेखे, स्थगय नळिनीदलनिचयेन पयोधरभारं, सुकान्ते कान्तिमति, मन्दम्मन्दमपनय बाष्पबिन्दून्, यूधिके यूधिकालंकृते, सञ्चारय कदलीदळताळवृन्तेन आर्द्रवातान्, एहि

---

सुन्दरि "मुग्धस्सुन्दरमूढयोः ।" इत्यमरः । मदनमञ्जरि, चन्दनवारिणा श्रीखण्डरसेन, अङ्गानि विरहतापतप्तान् ममावयवान्, सिञ्च आर्द्रीकुरु सरळे उदारे, वसन्तसेने, केशपाशं मदीयकुन्तलभारं, सवृणु सहृत्य बन्धय तरळे चञ्चले, कैतकधूळिं केतकीकुसुमपराग, अङ्गेषु मदवयवेषु, विकिर विक्षिप । वामे सुन्दरि (यद्वा) प्रतीपदर्शिनि, मदनमालिनि, शैवालकलापेन जलनीलीकदम्बकेन, वीजय शिशिरवात सचारय । चपले चञ्चले चित्ररेखे, चित्रपटे वर्णनयोग्ये पटे, चित्तचोरं मन्मनोऽपहारिण, जनं कन्दर्पकेतु, विलिख तूलिकया विरचय । भामिनि कोपने, विलासवति, मुक्ताचूर्णं मौक्तिकक्षोद, विक्षिप विकिर । रागिणि प्रेमवति, नलिनीदलानां निचयेन समूहेन, पयोधरभार स्तनमण्डल, स्थगय आच्छादय । सुकान्ते अतिसौन्दर्यशालिनि, कान्तिमति, बाष्पबिन्दून् अश्रुकणान्, मन्द मन्द शनैश्शनैः, अपनय मार्जय । यूधिका मागधीकुसुम तया अलङ्कृते, यूधिके, कदळीदळ रम्भापत्र तद्रूपेण तालवृन्तेन धवित्रेण, आर्द्रवातान् शिशिरमारुतान्, सञ्चारय प्रसारय । एहि आगच्छ । अनुगृहाण दयस्व

भगवति निद्रे, अनुगृह्राण मां, धिगिन्द्रियैरपरैः, किमिति लोचनमयान्येव न कृतान्यङ्गानि विधिना । भगवन् कुसुमायुध, तवायमञ्जलिरनुचरो भव भाववति मादृशे जने। मलयानिल सुरतमहोत्सवदीक्षागुरो, वह यथेष्टम् , अपगता मम प्राणाः, इति बहुविधं भाषमाणा वासवदत्ता सखीजनेन समं मुमूर्च्छ । सपदि परिजनप्रयत्नात् गृहीतजीवा, क्षणमतिशिशिरघनसाररसाकुलनिम्नगापुलिने, क्षणमतितुहिनमलयजरससरित्परिसरे, क्षणमतिलोहितकनकारविन्दकदम्बपरिवारितसरस्तटीचन्दनविटपिच्छायासु, क्षणमनिलोल्लसितदळेषु कदळीकाननेषु, क्षणं कुसुमप्रवाळशय्यासु, क्षणं नळिनीदळसंस्तरेषु, क्षणं तुषारसङ्घातशिशिरितशिलातलेषु, परिजनेन नीयमाना, प्रलयकालोदितद्वादशरविकिरण-

---

अपरैः लोचनव्यतिरिक्तैः, इन्द्रियैः, धिक् । लोचनव्यतिरिक्तानामिन्द्रियाणां नैष्फल्यान्निन्दितैव समुचितेति भावः । विधिना ब्रह्मणा, किमिति केन कारणेन । रागाविष्टमनो भावः तद्वति, मादृशे मत्तुल्ये, जने दयनीये जन्तौ, अनुचरः सहचरः, भव । मलयानिल दाक्षिणवायो, सुरतमहोत्सवे निधुवनमहामहे या दीक्षा व्रतादेशः तत्र गुरो आचार्य । यथेष्ट यथेच्छ, वह वाहि । सखीजनेन समं वयस्याभिस्सह, मुमूर्च्छ मोहं प्राप । **सपदीति** ॥ परिजनः किङ्करः, घनसारः हिमवालुका, निम्नगा नदी, पुलिनं सैकततलं, परिसरः समीपदेशः, कनकारविन्दं सौवर्णतामरसं, कदम्बं समूहः, चन्दनविटपी श्रीखण्डद्रुमः, प्रवालः पल्लवः, संस्तरः

कलापतीव्रविरहानलदह्यमाना, अतिकृशप्राणामिव तनुं बिभ्रती सा अबला, मन्दम्मन्दमान्दोलितदुग्धसिन्धुतरलतरङ्गच्छटाधवलहासच्छुरिताधरपल्लवं तन्मुखारविन्दं, द्विजकुलमिव श्रुतिप्रणयि तदीक्षणयुगळं, सहजसुरभिमुखपरिमळामोदमाघ्रातुकामेव दूरविनिर्गता तन्नासावंशलक्ष्मीः, कलङ्कमुक्तेन्दुकलाकलापकोमलपिय्यूषफेनपाण्डुरा तद्द्विजपङ्क्तिः, अदृष्टचरमनङ्गातिशायि तद्रूपं, तानि धन्यानि स्थानानि, ते जनपदाः पुण्याः, तानि नामाक्षराणि सुकृतभाञ्जि, यान्यमुना

शय्या, कलापः समूहः, बिभ्रती वहन्ती, मन्द शनैर्यथा तथा आन्दोळिता चञ्चला या दुग्धसिन्धोः क्षीराब्धे. तरळतरङ्गच्छटा चञ्चलवीचीपरम्परा तद्वत् धवलेन निर्मलेन हासेन हसनेन छुरितः रूषितः अधरपल्लव' यस्मिस्तत्, तस्य कन्दर्पकेतो' मुखारविन्द वदनसरोज, द्विजकुलमिव ब्राह्मणसमाज इव, श्रुतिप्रणयि वेदेषु प्रेमवत् (पक्षे) श्रुत्योः श्रोत्रयो प्रणयि, कर्णान्तविश्रान्तमित्यर्थः। तस्य ईक्षणयुगळ नेत्रद्वन्द्व, सहजसुरभि निसर्गपरिमळवाहि यत् मुख वदनं तस्य परिमळामोदं अतिमनोज्ञं सौरभ आघ्रातुकामेव ग्रहीतु साभिलाषेव, दूरविनिर्गता अत्यन्तदीर्घा, तस्य नासावशलक्ष्मीः अतिसुन्दरतरा नासिका, कलङ्केन लाञ्छनेन मुक्त. त्यक्त यः इन्दुकलाकलापः चन्द्रकलासमूहः तद्वत् कोमला पिय्यूषस्य अमृतस्य फेनवत् पाण्डुरा धवळा, तस्य द्विजपङ्क्तिः दन्तश्रेणी, पूर्व अदृष्टं अदृष्टचर 'भूतपूर्वे चरट्' इत्यनेन चरट्। अनङ्गातिशायि मन्मथातिलङ्घि, तद्रूप तस्य सौन्दर्य। धन्यानि भाग्यवन्ति। जनपदा' देशाः, सुकृतभाञ्जि पुण्यवन्ति। भावयन्ती ध्यायन्ती। प्रतिबिम्बित प्रतिफलितम्।

परिष्कृतानि,. इति मुहुर्मुहुर्भावयन्ती, विलिखितमिव नभसि, प्रतिबिम्बितमिव लोचने, पुरोदर्शितमिव चित्रपटे, तमितस्ततो विलोकयन्ती व्यतिष्ठत ॥ अथ तस्यास्तमालिका नाम शारिका तत्प्रियसखीभिस्समं समालोच्य कन्दर्पकेतुभावमाकलयितुं प्रेषिता । सापि मया सार्धमागताऽत्रैव तरोरधस्तात्तिष्ठतीत्युक्त्वा विरराम । अथ तच्छ्रुत्वा कन्दर्पकेतुस्सहर्षं समुत्थाय तमालिकामाहूय विदितवृत्तान्तामकरोत् । सा तस्मै कृतप्रणामा पत्रिकामुपानयत् । अथ मकरन्दस्तामादाय स्वयमेवावाचयत् । (श्लो) प्रत्यक्षदृष्टभावाप्यस्थिरहृदया हि कामिनी भवति । स्वप्नानुभूतभावा द्रढयति न प्रत्ययं युवतिः ॥ तच्छ्रुत्वा कन्दर्पकेतुरमृतार्णवनिमग्नमिव सर्वान-

---

भाव मनः, आकलयितु परिशीलयितु, प्रेषिता प्रहिता । आहूय आकार्य । विदितवृत्तान्तः ज्ञातवार्ता, अकरोत् कृतवान् ॥ सेति । कृतप्रणामा रचितनमस्कारा सती । उपानयत् समीप प्रापयत् । अथेति । स्वय मान्त मव्यय स्वेनैवेत्यर्थः । अवाचयत् अपठत् । 'वच परिभाषणे' चुरादिः । **प्रत्यक्षेति** ॥ कामिनी प्रमदा, प्रत्यक्षेण दृष्टाभिप्रायाऽपि अस्थिरहृदया अविश्वासेन तरलहृदया, भवति । स्वप्ने अनुभूतभावा अनुभूतदयितजनचित्तवृत्तिः, युवतिः तरुणी, प्रत्यय 'ममेव तस्यापि मयि महत्यासक्तिः ततस्सुलभोऽस्य समागम.' इत्येवभूत विस्रम्भ, न द्रढयति न दृढीकरोति । 'र ऋतो हलादेर्लघोः' इत्यनेन ऋकारस्य रादेशः । **पथ्यार्या । तदिति** ॥ तत् पत्रिकागत वाचिक, श्रुत्वा, आत्मान स्व,

न्दानामुपरिवर्तमानमिवात्मानम्मन्यमानो मन्दम्मन्दमुत्थाय प्रसारितबाहुयुगळस्तमालिकामालिलिङ्ग । तयैव च सार्धं किं करोति किं वदति कथमास्त इत्यादि सकलं वासवदत्तावृत्तान्तं स पृच्छंस्तं दिवसं तत्रैवातिवाह्य तस्मात्प्रदेशात् तया सहोच्चचाल ससुहृत्कन्दर्पकेतुः। अत्रान्तरे भगवानपि मरीचिमाली वृत्तान्तमिमं कथयितुमिव मध्यमं लोकमवततार । अथ वासरताम्रचूडचूडाचक्राकारः चक्रवाकहृदयसं-

---

अमृतार्णवे सुधासमुद्रे निमग्नमिव अवगाढमिव, सर्वेषा आनन्दानां ब्रह्माद्यानन्दानां, उपरि ऊर्ध्वदेशे, वर्तमानमिव तिष्ठन्तमिव, मन्यमान· चिन्तयन्, कन्दर्पकेतुः, मन्दम्मद शनैश्शनैः, उत्थाय, प्रसारित बाहुयुगळ करयुग येन तादृशस्सन्, तमालिकां तन्नाम्नी वासवदत्ताशारिकां, आलिलिङ्ग परिषस्वजे । **तयैवेति** ॥ तयैव सार्धं शारिकया सहैव, सः, सा, कि करोति किमनुतिष्ठति, कि वदति कि ब्रवीति, कथ आस्ते कीदृशी वर्तते, इत्यादि एवमादि, सकल समग्र, वासवदत्तोदन्तं, पृच्छन् नियुञ्जानस्सन्, त दिवस तत् दिन, तत्रैव यत्र तमालिका दृष्टा सल्लपिताच्च तस्मिन्नेव देशे, अतिवाह्य गमयित्वा, तस्मात् प्रदेशात्, तया सह, कन्दर्पकेतु ससुहृत् मित्रसहितः, उच्चचाल प्रातिष्ठत । **अत्रेति** ॥ अत्रान्तरे अस्मिन् समये, भगवान् मरीचिमाली सूर्योऽपि, इम वृत्तान्त इमां वार्ता, कथयितुमिवेत्यहेतौ हेतुत्वारोपात् **हेतूत्प्रेक्षा** । मध्यम लोकं भूलोक, अवततार अवरुरोह । अस्तमयासीदित्यर्थः। **अथेति** ॥ दिनमणिः सूर्यः, अकूपारपयसि पश्चिमसमुद्रजले, ममज्जेति सम्बन्धः । स कीदृगित्यत आह । वासरेत्यादिना । वासरः दिवस एव ताम्र-

क्रामितसन्तापतयेव मन्दिमानमुद्वहन्नस्तगिरिमन्दारस्तबकसुन्दरः, सिन्दूरराजिरञ्जितसुरराजकुम्भिकुम्भविभ्रमं बिभ्राणः, ताण्डवचण्डवेगोच्चलितधूर्जटिजटाजूटमकुटविकटबद्धबन्धुरवासुकिभोगमणिताटङ्कसनाभिमण्डलः, सन्ध्यासीमन्तिनीसरसयावकपत्रचारुः, वारुणीवारविलासिनीमाणिकुण्डलकान्तिः, कालकरवालसंछिन्नवासरमहिषस्कन्धचक्राकारः, मधुरमधुपूर्णं कपालमिव गगनकपालिनः, अम्लानकुसुमस्तबक इव नभश्श्रियः, पुष्पस्तबक इव गगनाशोकतरोः, कनकदर्पण इव प्रतीचीविलासिन्याः, भद्र इव वारुणीसङ्ग-

चूडः कुकवाकुः तत्सम्बन्धि यच्चूडाचक्र मूर्धोपरिस्थ शिखावलयं तस्य आकार इवाकारो यस्य सः तादृश., 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिः। उत्तरपदलोपश्च' इति वार्तिकेन समासः उपमानोत्तरखण्डलोपश्च। चक्रवाकः रथाङ्गनामा पक्षिविशेषः। सायसन्ध्यामारभ्य आप्रभात विश्लेषवेदनया चक्रवाकमिथुन परस्पर दुःख्यतीति लोकप्रसिद्धिः। मन्दारः तदाख्यः देववृक्षः। कुम्भी गज, धूर्जटिः शिवः तस्य जटाजूटः जटाबन्ध. बन्धुर मनोज्ञ, वासुकिः नागराजः, भोगः शरीरं, ताटङ्कः कर्णाभरणं, सनाभि सदृश, सीमन्तिनी नारी तस्याः सरसं आर्द्रं यत् यावकपत्र अलक्तककृतपत्ररेखा। वारुणी पश्चिमा दिक्। वारविलासिनी वेश्या, कालस्य करवालेन खड्गेन संछिन्नः खण्डितः य. वासररूपो महिषः तस्य स्कन्धचक्रस्य सरक्तोद्गारवर्तुलग्रीवाप्रदेशस्य आकार इव आकारो यस्य सः तादृशः। गगन वियदेव कपाली कापालिकः। कनकदर्पणः सौवर्णमुकुरः। भद्र इव बलराम इव, वारुणी पश्चिमदिक् सुरा च। रागः रक्तिमा स्त्री-

तः सरागश्च, दुर्विदग्ध इव परित्यक्तवसुः सविषादश्च, शाक्य इव रक्तांशुकधरः, सूरिरिव संज्ञोपेतः, भगवान् दिनमणिः, अपराकूपारपयसि तरळतरङ्गवेगोच्चलितविद्रुमविटपाकृतिर्ममज्ज। ततः क्रमेण रजोलुठितोत्थितकुलायार्थिकलहविकलकलविङ्ककुलकलकलवाचालशिखरेषु शिखरिषु, वसतिसाकाङ्क्षेषु ध्वाङ्क्षेषु, अनवरतदह्यमानकालागरुधूपपरिमलोद्गारेषु वासागारजालविवरेषु, दूर्वाञ्चिततटिनीतटनिविष्टगोष्ठीविदग्धजनप्रस्तूयमानकथाश्रवणोत्सुकशिशुजनकलकलनिवारणक्रुद्धेषु वृद्धेषु, आलोलिकातरळरसनाभिः कथितबहुकथाभिः जरतीभिरतिलघुकरताडनजनितसुखाभिरनुगते शिशु-

---

विषयकः प्रेमा च । दुर्विदग्ध इव दरिद्र इव, वसु. रश्मि धनञ्च । विषाद. मेघः दु.ख च । शाक्य. बौद्धः । अंशुक वस्त्र रश्मिश्च । सूरिः पण्डित. स इव, सज्ञा तन्नाम्नी पत्नी । (पक्षे) संवित् । विद्रुम प्रवाळः । **तत इति** ॥ तत क्रमेण सन्ध्या साय सन्ध्या, समदृश्यतेति सम्बन्धः । तामेव वर्णयति रजोलुठितेत्यादिना । शिखरिषु वृक्षेषु । रज. भूधूळि. तत्र लुठितानां विलोडितानां पुनरुत्थितानां कुलायार्थिनां निजनीडान्वेषिणां कलहेन विकलानां कलविङ्कानां चटकानां कुलस्य समूहस्य कलकलेन कलकलध्वनिना वाचालानि सशब्दानि शिखराणि अग्रभागा येषां ते तादृशेषु सत्सु । ध्वाङ्क्षेषु काकेषु, वसतौ निजावासस्थाने, साकाङ्क्षेषु साभिलाषेषु सत्सु, उद्गार आधिक्य, जालानि गवाक्षा, दूर्वा हरिततृण, तटिनी नदी, विदग्धा. चतुराः पण्डिता वा । आलोलिका शिशुरोदनशान्त्ये कृत. अव्यक्तस्तालुरव । जरतीभिः वृद्धाभिः, शिशव इन्छन्ति

यिपमाणे शिशुजने, विरचितकन्दर्पमुद्रासु क्षुद्रासु, कामुकजनानुबद्ध्यमानदासीजनविविधाश्लीलवचश्श्रुतिविरसीकृतासु कामिनीपु, सन्ध्यावन्दनोपविष्टेषु शिष्टेषु, रोमन्थमन्थरकुरङ्गकुटुम्बाध्यास्यमानम्रदिष्ठगौष्ठीनपृष्ठास्वरण्यस्थलीषु, निद्राविद्राणद्रोणकुलकलिलकुलायेषु ग्रामतरुनिचयेपु, कापेयविकलकपिकुलकलिलेष्वाश्रमद्रुमेपु, कलकलविकलबककुलेष्वारामतरुषु, निर्जिगमिषति जरत्तरुकोटरकुटीरकुटुम्बिनि कौशिककुले, तिमिरतर्जननिर्गतासु दहनप्रविष्टदिनकरशिखास्विव स्फुरन्तीषु दीपशिखासु, मुखरितधनुषि वर्षति शरनिकरमशेषसांसारिकशेमुषीमुषि मकरध्वजे, सुरताकल्पारम्भशोभिनि शम्भलीभाषितभाजि भजति भूषां भुजिष्याजने, सैर-

---

शिशयिषमाणे, शीङस्सनि रूपम् । मुद्रा चिह्न, क्षुद्राः वेश्याः । अश्लीलवच ग्राम्यवचनम् । विरसीकृतासु वैरस्यमापादितासु, शिष्टा. श्रुतिस्मृत्युक्ताचारपरा. । रोमन्थः चर्वितस्य तृणादेः पुनराकृष्य चर्वणात्मकः चतुष्पाज्जन्तुव्यापार. । मन्थरा स्तब्धा. अलसा वा । म्रदिष्ठा. अतिमृदवः । गौष्ठीन भूतपूर्व गोस्थानम् । द्रोणाः काका । बका. जलपक्षिविशेषाः । आराम उपवन । कौशिक घूकः । 'दिवान्धः कौशिको घूक' इत्यमर । सासारिकाः ससारिणः । शेमुषी प्रज्ञा । मकरध्वजः मन्मथः । सुरताय सङ्गमार्थ य. आकल्पः वेषः । 'आकल्पवेषौ नैपथ्य' इत्यमर. । शम्भली कुट्टिनी । भुजिष्याजने दासीजने । सैरन्ध्री परगृहस्था गन्धकारिका । 'सैरन्ध्री परवेश्मस्था स्ववशा

न्ध्रीबद्ध्यमानरशनाकल्पजल्पाकजघनासु जनीषु, विश्रान्तकथाऽनुबन्धतया प्रवर्तमानकथकजनगृहगमनत्वरेषु चत्वरेषु, समासादितकुक्कुटेषु किरातजननिष्कुटेषु, कृतयष्टिसमारोहणेषु बर्हिणेषु, विहितसन्ध्यासमयव्यवस्थेषु गृहस्थेषु, स्वपति सङ्कोचोद्श्वदुच्चकेसरकोटिसङ्कटकुशेशयोदरकोटरकुटीरकुटिलशायिनि षट्चरणचक्रे, अनेनैव पथा भगवता भास्वता गन्तव्यमिति सर्वतः पट्टमयैर्वसनैर्मणिकुट्टिमाळिरिव विरचिता वरुणेन रवेः, कालकरवाळकृत्तस्य दिवसमहिषस्य रुधिरधारेव, विद्रुमलतेव चरमार्णवस्य, रक्तकमलिनीव गगनतटाकस्य, काञ्चनकेतुरिव कन्दर्परथस्य, मञ्जिष्ठारागारुणपताकेव गगनहर्म्यस्थलस्य, लक्ष्मीरिव स्वयंवरगृहीतपीता-

---

शिल्पकारिका' इत्यमरः । रशनाकल्प. मेखलाभूषण । जन्यः स्नुषाः । 'समा स्नुषा जनी वध्व.' इत्यमरः । चत्वर चतसृणां रथ्यानां सयोजनदेशः । अङ्गण वा 'अङ्गण चत्वराजिरे' इत्यमरः । निष्कुट. गृहोपवन । 'गृहारामस्तु निष्कुटः' इत्यमरः । बर्हिणाः मयूराः । केसराः किञ्जल्काः । कोटिः अग्रं, कुशेशयं तामरस । कुशे जले शेते इति कुशेशय । 'हलदन्तात्सप्तम्यास्सञ्ज्ञायां' इत्यलुक् । भास्वता सूर्येण । पट्टमयैः अरुणवर्णकौशेयस्वरूपै. । वसनैः वस्त्रै. । मणिकुट्टिमालिरिव रत्नखचितनिबद्धभूप्रदेशपरम्परेव, पताका ध्वजाग्रनिबद्ध वस्त्र । स्वयंवरे गृहीतः भर्तृत्वेन आश्रितः पीताम्बरः श्रीवासुदेवः यया सा । (पक्षे) स्वयं (वबयोः रलयोश्च अभेदात्) बलगृहीत पीत अम्बर आकाश यया सा ।

म्बरा, भिक्षुकीव तारानुरागरक्ताम्बरधारिणी, वारयोषिदिव पल्लवानुरक्ता, कामिनीव कालेयाताम्रपयोधरभरा, बभ्रुरिव कपिलतारका, भगवती, सन्ध्या समदृश्यत। ततः क्षणेन क्षणदानुरागचतुरासु वेश्यास्विव, सन्ध्याशिष्यास्विव स्फुरन्तीषु दीपलेखासु, तुलाधारशून्यायां पण्यवीथिकायामिव दिवि, घटमानदळपुटासु पुटकिनीषु, तिमिरप्रतिहतेष्विवेतस्ततः परिभ्रमत्सु कमलसरसि मधुकरनिकरेषु, विकलकुररीरुतच्छलेन रविविरहविधुरासु विलपन्तीष्विव सरोजिनीषु, प्रतिफलितसन्ध्यारागरज्यमानसलिलस्थितासु पतिविनाशहृत्पीडया दहनप्रविष्टास्विव कमलिनीषु, गणक इव नक्ष-

---

भिक्षुकी श्रमणा, तारा नाम काचिद्देवता तस्यां अनुरागः भक्तिः । रक्ताम्बर कषायेण रक्त वस्त्र । (पक्षे) ताराः नक्षत्राणि, अनुरागः रक्तिमा । अम्बर आकाश । वारयोषित् गणिका । पल्लवाः विटाः, तेष्वनुरक्ता । (पक्षे) पल्लववत् किसलयवत् अरुणवर्णा । कालेयं कुङ्कुम । पयोधरौ स्तनौ । (पक्षे) मेघाः । बभ्रुः नकुली, कपिलाः कपिलवर्णाः तारकाः नक्षत्राणि यस्यास्सा । (पक्षे) तारका कनीनिका । तत इत्यादि । क्षणदा रात्रिः । अनुरागः स्नेहः रक्तिमा च । तुलां धटां धारयतीति तुलाधारः वणिक् (पक्षे) तुलासप्तमो राशि. सः आधारो यस्य सः तुलाधारः आदित्यः । पुटकिन्यः पद्मिन्यः। मधुकराः भ्रमराः । कुररी उत्क्रोशवधूः । सरोजिन्यः पद्मिन्यः । प्रतिफलितः प्रतिबिम्बितः । गणकः दैवज्ञः, तस्मिन्निव नक्षत्रसूचके नक्षत्रप्रकाशके । (पक्षे) शुभाशुभसूचकाश्विन्यादिनक्षत्रप्रकाशके, ईदृशे

त्रसूचके प्रदोषे, हरकण्ठकालिमसनाभि, दैत्यबलमिव प्रकटिततारकं, भारतसमरमिव वर्धमानोलूककलकलं, धृष्टद्युम्नवीर्यमिव कुण्ठितद्रोणप्रभवं, नन्दनमिव सञ्चरत्कौशिकं, कृष्णवर्त्मानमिवाखिलकाष्ठापहारकं, सगर्भमिव घनतरपाषाणकर्कशासु गिरितटीषु, सचक्षुरिव सुप्तप्रबुद्धसिंहनयनच्छविच्छटाकपिलेषु सानुषु, सजीवमिव तमोमणिभिः, संवर्धितमिवाग्निहोत्रधूमलेखाभिः, मांसलितमिव कामिनीकेशसंस्कारधूपपटलैः, उद्दीपितमिव घनतरनीलमधुकरपटलैः, मेचकितमिव पेचकिकपोलगलितदानधाराशीकरैः, पुंजीकृतमिव विततमालकाननच्छटाच्छायासु, निलीयमानमिव कज्जलरसश्यामभोगिभोगेषु, प्रावरणमिव रजनीपांसुलायाः,

---

प्रदोषे रजनीमुखे. तिमिरमजृम्भतेति भाविना सबन्ध । हरः शिव तस्य कण्ठस्य य· कालिमा नैल्य तत्सनाभि सदृश । तारका नक्षत्राणि (पक्षे) तारकासुरः । उलूका· घूकाः (पक्षे) दुर्योधनमातुलस्य शकुनेः पुत्र । द्रोणः भारद्वाज. (पक्षे) काकः । कौशिकः दिवाभीत (पक्षे) इन्द्र । कृष्णवर्त्मा अग्नि. । काष्ठाना दिशां अपहारक निजप्रसरणेन आच्छादक । (पक्षे) काष्ठाः एधा. । सगर्भ गर्भयुक्तमिव । छटा समूह । सानु प्रस्थः । तमोमणयः खद्योता । मांसलित अभिवर्धितं । सस्कारः गुणाधान । धूपः ससौरभो धूम. । पटल समूहः । मेचकित नैल्यमापादित । पेचकी गज । 'पेचकी द्विरदः पद्मी' इति कोश । दान मदजल । तमाल तापिच्छद्रुम· । कज्जल अञ्जनम् । ·भोगिन.

पलितौषधमिव वृद्धवारयोषितां, अपत्यमिव रजन्याः, सुहृदिव कलिकालस्य, मित्रमिव दुर्जनहृदयानां, बौद्धसिद्धान्तमिव प्रत्यक्षद्रव्यमपह्नुवानं, मुदितमिव मत्तमातङ्गगण्डस्थले, फलितमिवातिसान्द्रबहुळच्छदविततमालकानने, साटोपमिव स्फुटपाटवोत्कटविशङ्कटानेकविटपिविटपोत्कटस्फुटकुसुमपुटनिहितपदषट्पदावलीषु, परिस्फुरितमिव कान्ताघनतरकेशसंहतौ, उन्मीलितमिवेन्द्रनीलरश्मिभिः, अतिशयमांसलितमिवावटतटेषु, घनतरघोरघस्मरविषधरभोगभासुरं, मत्तदन्तिदन्तद्युतितर्जनजर्झरिततमं, दिवाकरोदयारम्भमिव संकुचत्कुवलयं, असतां महत्त्वमिव तिरस्कृतसकलान्तरं, निमीलन्नीलोत्पलव्याजरचिताञ्जलिपुटेन नमदिवागतां तमीं,

---

सर्पाः । प्रावरणं अवकुण्ठनवस्त्रम् । पांसुला स्वैरिणी । पलितं जरसा कृतं शौक्ल्यं, बौद्धतन्त्रमिव, प्रत्यक्षद्रव्यं अक्षिगोचरं भू भूमिधरादिकं वस्तु । अपह्नुवानं तिरस्कुर्वाणम् । तेषां सर्वशून्यवादित्वादिति भावः । मातङ्गः गजः । फलितमिव निष्पन्नमिव, विटपी तरुः, षट्पदाः भ्रमराः । घनतरा अतिनिबिडा । संहतिः समूहः । उन्मीलितमिव अभिवृद्धमिव, अवटतटेषु गर्तप्रदेशेषु । भोगाः शरीराणि । दन्ती गजः । सङ्कुचत् सङ्कोचं प्राप्नुवत्, कुवलयं नीलनीरजं यस्मिन् । (पक्षे) कुवलयं भूमण्डलम् । तिरस्कृतं न्यक्कृतं सकलानां पण्डितानां पामराणाञ्च अन्तरं विशेषः येन तत् (पक्षे) अन्तरं अवकाशः छिद्रं वा । तमी रात्रिः ।

तिमिरमराजत । अथ, क्षणेनैव, सन्ध्याताण्डवाडम्बरोच्छलितमहानटजटाजूटकूटकुटिलस्खलनविवर्तितजह्नुकन्यावारिधाराबिन्दव इव प्रकीर्णाः, दुर्भरधरणीभारभुग्नभीमदिङ्मातङ्गगण्डमण्डलविमुक्तशीकरच्छटा इव तताः, अतिदवीयोनभस्स्थलभ्रमणखिन्नरवितुरङ्गमास्यविवरान्तफेनस्तबका इव विशीर्णाः, गगनमहासरःकुमुदसन्दोहसन्देहदायिनः, विश्वं गणयतो धातुः शशिकठिनीखण्डेन तमोमषीश्यामे अजिन इव वियति संसारस्यातिशून्यत्वात् शून्यबिन्दव इव विलिखिताः, जगत्त्रयविजिगीषाविनिर्गतस्य मकरकेतोः रतिकरविकीर्णा इव लाजाञ्जलयः, गुळिकास्त्रगुळिका इव विक्षिप्ताः पुष्पधनुषः, वियदम्बुराशिफेनस्तबका इव विततताः, रतिविरचिताः गगनाङ्गणे आतर्पणपञ्चांगुळय इव विकीर्णाः,

---

अराजत अशोभत। **अथेत्यादि** । अथ क्षणेनैव, ताराः नक्षत्राणि व्यराजन्त इति योजना । ताराः कीदृश्य इत्यत आह सन्ध्येत्यादिना । ताण्डवं नटनम् । जूटः बन्धः । कूटः अग्रम् । छटा समूहः । तताः विस्तृताः । अतिदवीयः अतिदूरतरम् । दूरशब्दादीयसुनि "स्थूलदूर" इत्यादिना यणादिपरस्य लोपः। पूर्वस्य ऊकारस्य गुणश्च। फेनस्तबकः फेनपुञ्जः । कुमुदानि कैरवाणि । कठिनीखण्ड लेखनसाधनसुधाशकल । शून्यबिन्दवः गणनाशून्यस्थानसूचनार्थं विलिखिताः कुण्डलाकाराः रेखाः । विजिगीषा जेतुमिच्छा । मकरकेतोः मन्मथस्य । गुळिकास्त्र धनुर्विशेष. । गुळिकाः मृदा कल्पिताः पिण्डखण्डाः । आतर्पणपञ्चाङ्गुळयः पिष्टादिना

व्योमलक्ष्मीहारमुक्तानिकरा इव विच्छिन्नाः, हरकोपानलदग्धकामचिताचक्राच्चन्द्राद्वात्यावेगविप्रकीर्णाः कामकीकसखण्डा इव, तिमिरोद्गमधूमळसन्ध्यानलपरितप्तगगनमहानसस्थालीभर्ज्यमानस्फुटितलाजानुकारास्तारा व्यराजन्त । ताभिश्श्वित्रीव वियदशोभत । दीर्घतरोच्छ्वासरचनाकुलं संश्लेषवक्त्रचक्रघटनापटु सत्काव्यविरचनमिव, चक्रवाकमिथुनमतीवाखिद्यत । कमलिनीसञ्चरणलग्नमकरन्दबिन्दुसन्दोहलुब्धमुग्धमुखरमधुकरमालाशबलगात्रं कालपाशेनेव मूर्तिमद्रामशापेनेवाकृष्यमाणं, चक्रवाकमिथुनं विजघटे । रविविरहविधुरायाः कमलिन्याः हृदयमिव द्विधा पपाट चक्रवाक-

साधनेन पञ्चभिरङ्गुलिभिर्विरचितरचनाविशेष । "पिष्टादिना तु मङ्गल्या या तु कुड्याङ्गणादिषु । चर्चा पञ्चाङ्गुलैःक्लृप्ता तदातर्पणमिष्यते" इति कोशः । विच्छिन्ना त्रुटिता. । चिताचक्र शवदाहार्थदारुचितिविशेष । वात्या मण्डलभ्रमणशीलो वात । कीकसखण्डा अस्थिशकला. । महानस पाकस्थान । श्वित्रीव श्वेतकुष्ठीव । **दीर्घेति** । अत्यन्त दीर्घः दीर्घतरः । उच्छ्वास. आख्यायिकाचिह्न कथाविच्छेददेशः । (पक्षे) उच्छ्वासः व्यथासूचको दीर्घनिश्वास । सश्लेषः अर्थद्वयवाची । वक्त्र वृत्तविशेष , चक्र दुष्करबन्धविशेष. । (पक्षे) सश्लेषः आलिङ्गन, वक्त्रघटना चुम्बन । अखिद्यत दैन्यमलभत । **कमलिनीति** ॥ कमलिनी सरोजिनी, मुग्धाः सुन्दर्यः । शबल मिश्रम् । कालपाशेनेव यमपाशेनेव । मूर्तिमान् रामस्य दाशरथे य शाप. तेनेवेति चोत्प्रेक्षा । आकृष्यमाण अन्यत अपसार्यमाण । विजघटे वियुयुजे । **रवीति** ॥ पपाट विश्लेष प्राप । **आगमिष्यत इति** ॥

मिथुनम् । आगमिष्यतो हिमकरदयितस्य पार्श्वे सञ्चरन्ती कुमुदिन्याः भ्रमरमाला दूतीवालक्ष्यत । तारकानयनजलविन्दुव्याजादस्तङ्गतस्य दिवाकरदयितस्य शोकादिव ककुभो व्यरुदन् । भास्वतो निजदयितस्य विरहादभिनवकिञ्जल्कराजिव्याजेन शोकानलमुर्मुरो नळिनकोशहृदये जज्वाल । ततो रविरश्मिदवाग्निभस्मीकृतनभोवनमषीराशिरिव, श्रुतिवचनमिव क्षपितदिगम्वरदर्शनं, कृष्णमपि तिरस्कृतविश्वरूपभावविशेषं, सद्योद्रावितराजतपटद्रवप्रवाह इव, शार्वरमन्धकारमजृम्भत । अथ क्षणेन क्षणदाराजकन्याकन्दुक इव, कन्दर्पकनकदर्पणमिव, उदयगिरिवालमन्दारपुष्पस्तवक इव,

---

हिमकर चन्द्र. । कुमुदिनी कैरविणी । **तारकेति ॥** ककुभः दिश । स्त्रीलिङ्गनिर्देशात् स्त्रिय इत्यपि । **भास्वत इति ॥** मुर्मुरः तुषाग्निः । जज्वाल दिदीपे । **तत इति ॥** दवाग्निः । काननाग्निः । नभः आकाशमेव वन अरण्यम् । श्रुतिवचन वेदवाक्यम् । क्षपित नाशित दिगम्वराणां जैनाना मत येन तत् (पक्षे) दिशां आशाना अम्बरस्य नभसश्च दर्शनम् । कृष्णमपि शौरिमपि, तिरस्कृतः निरस्त· विश्वरूपभावविशेषः येन । स्वीकृतविश्वरूपभावविशेषस्य तन्निरसन न युज्यत इति विरोधः । परिहारस्तु । कृष्ण नील । तिरस्कृताः छादिताः विश्व अखिलं भुवन समस्तं वा रूप वस्तुस्वरूप भावविशेषा. पदार्थविशेषाश्च येन । राजतपट कृष्णाभ्रक । शर्वर्या इदं शार्वर । **अथेति ॥** क्षणदा रात्रि. । कन्दुक पिण्डाकार क्रीडनक वस्तु । स्तबकः गुच्छ । महिलाललाम उत्तमा स्त्री ।

प्राचीमहिळाललामललाटतटघटितवन्धूककुसुमतिलकचक्राकार:, कनककुण्डलमिव नभश्श्रिय:, दिग्वधूप्रसाधिकाहस्तस्रस्तालक्तकपिण्ड इव, गगनसौधतलशातकुम्भकुम्भ इव, प्रस्थानमङ्गळकलश इव मकरकेतो: त्रिभुवनविजयैषिण:, कुंकुमारुणस्तनकलश इव आखण्डलाशाङ्गनाया:, गरुड इव हरिणाधिष्ठित:, राम इव लक्ष्मणान्वित:, वानरेन्द्र इव अनुरक्ततार:, वृषभ इव रोहिणीप्रिय:, सुराजेव रक्तमण्डल: मृदुकरसहितश्च, जाम्बवानिव ऋक्षपरिवृत:, रजनीपतिरुदयमाससाद । कामिनीहृदयसंक्रामित इव, चक्राङ्गनानयनयुगळपीत इव, रक्तकुमुदकोशालीढ इव, क्षीणतां गत: क्षणदाकरगतो राग: । अनन्तरं शर्वरीव्रजाङ्गनाविष्कृतनूतननवनीतस्वस्तिक इव, मृगच्छायामुद्रित इवादर्श:, श्वेतात-

---

तिलक विशेषक । प्रसाधिका अलङ्कर्त्री । अलक्तकपिण्ड यावकखण्ड: । शातकुम्भ सुवर्ण । मकरकेतु मदन. । आखण्डलाशा पूर्वदिक् । हरिणा विष्णुना (पक्षे) हरिणेन सारङ्गेण । लक्ष्मण. सौमित्रि: (पक्षे) लक्ष्मणा कलङ्केन । वानरेन्द्र. वाली । स इव, अनुरक्ता अनुरागवती तारा तन्नाम्नी पत्नी यस्य (पक्षे) तारा· नक्षत्राणि । रोहिणी सुरभि. नक्षत्रविशेषश्च । सुराजा सद्भूपति. । रक्त अनुरक्त मण्डल राष्ट्रं (पक्षे) मण्डल बिम्ब । कर· राजग्राह्यो भाग·, किरणश्च। ऋक्षा: भल्लुका: (पक्षे) नक्षत्राणि । **कामिनीति** ॥ सङ्क्रामित. सयोजित: । कोश मुकुळ: । क्षणदाकर: चन्द्र: । **अनन्तरमिति** ॥ नवनीतस्वस्तिक· दधिसारपिण्ड·, मृगस्य हरिणस्य छायया मुद्रित लाञ्छित., आदर्श दर्पण, दन्तपालि-

पत्रमिव मकरकेतोः, दन्तपाळिचक्रमिव वियन्महाखड्गस्य, श्वेतचामरमिव मदनमहाराजस्य, बालपुळिनमिव निशायमुनायाः, स्फाटिकलिङ्गमिव गगनमहातापसस्य, अण्डमिव कालोरगस्य, कम्बुरिव नभोमहार्णवस्य, चैत्यमिव कालाङ्गारशवलं भवनेत्राग्निदग्धस्य सङ्कल्पजन्मनः, पुण्डरीकमिव गगनगामिगङ्गायाः, फेनसंचय इव गगनमहार्णवस्य, पारदपिण्ड इव गगनधातुवादिनः, राजतशकल इव दूर्वाप्रवाळशवलो मनोभवाभिषेकस्य, श्वेतचक्रमिव कन्दर्परथस्य, चूडामणिरिव उदयगिरिनागराजस्य, श्वेतपारावत इव अम्बरमहाप्रासादस्य, गगनसरिद्धौतकुम्भस्थलमिव ऐरावतस्य, भग्नशृङ्गपुराणगोमुण्डखण्ड इव ताराश्वेतगोधूमशालिनो नभःक्षेत्रस्य, मलयजपिण्डपाण्डु राजततालवृन्तमिव सिद्धाङ्गनाहस्तस्रस्तं, क्षीणरागो भगवानुडुपतिरुज्जगाम। यश्च पुण्डरीकं लोकलोचनमधुकराणां, शयनीयसैकतं चित्तराजहंसानां, स्फा-

---

चक्र दन्तमयी खड्गस्य मुष्टेरधःफलका। बालपुलिनं अभिनव सैकतं। उरगः सर्पः। कम्बु. शङ्खः। चैत्य चितास्थानम्। कालाङ्गार इङ्गालम्। सङ्कल्पजन्मा मन्मथः। पारदपिण्ड रसपिण्डम्। धातुवादी रसवादी। दूर्वा हरिततृणाङ्कुरः। नागराजः गजपतिः। पारावतः कपोतः। गगनसरित् गङ्गा। भग्नशृङ्गः नष्टविषाणः, पुराण प्राक्तनः गोमुण्डखण्डः गोशिरःखण्ड। सस्यसमृद्धक्षेत्रेषु दृष्टिदोषपरिहाराय सस्यघातुकमृगानांसञ्जनाय

टिकव्यजनं विरहवह्नीनां, श्वेतशाणचक्रं मन्मथसायकानाम् । अत्रान्तरे अभिसारिकासार्थप्रेषितानां प्रियतमान् प्रति दूतीनां द्व्यर्थास्सप्रपञ्चा विकारभंगुराः संवादा बभूवुः । तथाहि ।

वा गोमुण्डखण्डाद्याकारा विभीषिका उत्तभ्यत इति जगति प्रसिद्धिः । उडूनि नक्षत्राणि । व्जजन तालवृन्त । **अत्रान्तर इति** ॥ अत्रान्तरे मानिनीमानपाटनपटुतमचन्द्रोदयावसरे, अभिसारिकाः सम्भोगाय कान्तमन्विष्य सङ्केतस्थानाय गच्छन्त्यो ललनाः । तासा सार्थेन समूहेन । द्व्यर्थाः प्रशंसारूपेण निन्दारूपेण चार्थद्वयपराः इत्यर्थ. । सप्रपञ्चाः वक्रोक्त्यादिसहिताः । विकारैः मदनविकारजनितचित्तवृत्तिविशेषैः, भङ्गुराः मानावस्थायामिव न केवल परुषा एव, अपितु किञ्चित्स्वस्वपराधव्यञ्जका इत्यर्थः । एवभूताः संवादाः सल्लापा', प्रियतमान् वल्लभान् उद्दिश्य बभूवु. । तानेवाह । तथाहीत्यादिना । हे कान्त कमनीय, स्त्रीकृत त्वदलाभनिबन्धनया दुस्सहया मदनवेदनया मरणशरणीकृतम्, आत्मान, अव रक्ष । तत्वतः नाकलयसि परमार्थतो न जानासि । यस्मान् त्वमेव तस्याः वल्लभ. । अतो मरणशरणीकृतमात्मान रक्षेति । अयमभिप्रायः । भवानेव तस्या वल्लभः । सा च कामिनी त्वदर्थ मरणावस्थां गता । तस्मान्मरणशरणीकृतमात्मान शरीर नित्यमेव रक्षेति प्रशसावाद । कुलटासक्तत्वेन तस्यैव निन्दापि । न विद्यते वस्त्र यस्य सः अवस्त्रः, मवस्त्र अवस्त्र सपद्यमान कृत अवस्त्रीकृत सर्वस्वापहारेण कौपीनमात्रशेषत्वात् नग्नत्व आपादितम् । यद्वा कुत्सितस्त्रीवशमापादित आत्मान स्व तत्वतः परमार्थतः नाकलयसि न जानासि । अयमभिप्रायः । भवानेव तस्याः पतित्वे योग्यः । सा च विचक्षणा । एवमुभयोरानुरूप्ये सति ता त्यक्त्वाऽन्यत्रारसिकायां कुलटाया आसक्तेन त्वया आत्मा एवभूतः कृत इति ।

अवशीकृतमात्मानं नाकलयसि तत्वतः कान्त । प्रस्तर इव क्रूरोऽसि । न चाकर्षकचुम्बकद्रावकेष्वेकोऽसि भ्रामकोऽसि परं

---

प्रस्तर इव पाषाण इव, क्रूरोऽसि अतिकठिनोऽसि । तत्रापि न चाकर्षकः यत्सबन्धात् प्रत्युप्तमपि लोह निस्सरति । अयस्कान्तमणि. चुम्बकः । यत्सम्बन्धाल्लोह उपगच्छति । सूर्यकान्तो वा । सूर्यकराभिमृष्टयच्छाया-सम्बन्धादिन्धनादावग्निरुत्पद्यते । द्रावकः यत्सम्बन्धाल्लोह द्रवति । चन्द्रकरस्पर्शात् स्वय द्रवति सचन्द्रकान्तो वा । भ्रामक. यत्सम्बन्धात् लोह भ्रमति सः । चुम्बको द्रावकश्चैवाकर्षको भ्रामकस्तथा । एकद्वित्रि-चतुःपञ्चषण्मुखास्सम्भवन्ति ते । इति लोहशास्त्रे । यद्वा कामकलाकौशलेन यो नारीमाकर्षति स. आकर्षक । रतिकौशलेन यश्चुम्बति स चुम्बकः । औषधिविशेषयोगेन स्तनादिमर्दनेन वा य. कठिनहृदयां कामिनी द्रावयति स द्रावक । एतेषु (निर्धारणसप्तमी) नैकोऽसि । पर केवल, भ्रामकः असि । अन्यासक्तो योऽन्यनारी भ्रामयति प्रतारयति स भ्रामकः । (प्रशंसापक्षे) कस्य शत्रुशिरसोऽन्तः यस्मात् सः कान्तः । आकर्षक धनुराकर्षकः । चुम्बकः सैन्यप्रवेशज्ञः । द्रावकः परसैन्यविद्रावणः । तेषु एकः अद्वितीयः । नाऽसि ? एक एवेत्यर्थः । भ्रामकः परसैन्यभ्रमापादकः स्वाधिष्ठिताश्वभ्रमणापादको वा । अर्थान्तर च । हे कान्त मनोहर, प्रस्तर इव न क्रूरोऽसि । प्रार्थितस्सन्नपराधान् क्षमसे । आकर्षकचुम्बकद्रावकाः इषवः बाणाः यस्य, सः काम इत्यर्थः । तद्वत् एकोऽसि अद्वितीयोऽसि । नारीचेतसां भ्रमापादकश्च । यद्वा । आकर्षकचुम्बकद्रावकेषु नचैको भवसि । परं भ्रामकोऽसि । आकर्षकादयः पुरुषविशेषाः । दूराकर्षणशक्तो यः साकर्षक इति स्मृतः । सर्वेषां सर्वलोभत्व कुरुते यस्सचुम्बकः । कृतार्थ इव यो भाति स तु द्रावक उच्यते । भ्रामको मधुराभाषः-सत्सु च

कितव । धर्मार्थान्यप्रयुक्तः क्षेपणिक इव मुधा वाहिततरवारिस्त्वमसि । सखेदमिव तां मनसा चिन्तयासि दुर्लभाम् । सत्वसाराचित्तो यो रिपुमण्डलाग्रतो निर्वृतिमुपेत्य तिष्ठति ।

---

द्वेषहेतुषु ॥ इति भोजः । निन्दाविभागोऽस्मिन्वाक्यद्वय एव । अतः पर ह्यर्थमात्रमेव । धर्मः सुकृत अर्थः प्रयोजन यस्य तादृशेन अन्येन राज्ञा केनापि पुरुषेण वा प्रयुक्त प्रेरितः, क्षेपणिकः नाविक इव, मुधा वृथा, वाहिततर वारि जल येन सः, अत्र स्वामिन एव धर्मो न नाविकस्येत्यर्थः । अर्थान्तरन्तु । धर्मार्थान्येन कामेन प्रयुक्तः प्रेरितः, मुधा व्यर्थमेव, वाहितः धृतः तरवारिः खड्गः येन सः । तादृशोऽसि । एतेनैवमाह दूती । योहि तीक्ष्णखड्गधारी भवति, स किं पराङ्गनाभिसरणे बिभेति? । भवानपि खड्गधारीति भावः । सखे मित्र, दमिव निजभार्यामिव सुलभां तां नायिका मनसा दुर्लभा चिन्तयसि । मैव जानीथाः । सा भार्येव तव सुलभेति । 'द कळत्रे बुधे रिक्ते छेदे दाने च दातरि' इति कोशः । (पक्षे) सखेदमिव तां नायिकां मनसाऽपि दुर्लभा जानासि मैव मस्थाः । सुलभैव अह तुभ्य दापयामीति । अयमभिप्रायः यदि कामुकान्तरात् त्वं भयमकार्षीः अह तत्र विघ्ननिवारणार्थं भवामीति । **सत्वेति** ॥ सत्वं माहात्म्य सारः सामर्थ्य ताभ्या गृहीतहृदयः सत्वसारचित्तः, यः पुरुषः, रिपुमण्डलाग्रतः शत्रुसमूहाग्रतः निर्वृतिं परमसौख्य उपेत्य प्राप्य, तिष्ठति, स एव पुरुष इति (पक्षे) सतु, असाराचित्तः असारहृदयः, यः पुरुष, रिपुमण्डलाग्रतः शत्रुखड्गात्, अनिर्वृतिं असुख (दुःखमिति यावत्) उपेत्य तिष्ठति । एतेनेदमाह दूती । यदि कामुकान्तरभयेन नायिका नाभिगच्छसि तदा त्व पुरुषो न भवसि । कार्यारम्भः तावान्

स खलु वीरः प्रतिपक्षस्य यस्सम्प्रहारतः कुञ्जरान्नयति । धृतोरुकरवालसंचयोऽपि परमकाण्ड एव सम्पतन् महापदं विग्रहेण लभते । राजसेन राजसे नरहितो रहितो ध्रुवम् । अस्ति विशारदा शारदाभ्रविशदा विशदात्मनीनमहिमानम-

---

विधातव्य पुरुषेण, सिद्धिर्भवतु वा मा वा । **स इति** ॥ स खलु, वीरः शूरः । यः, सम्प्रहारतः युद्धात्, प्रतिपक्षस्य शत्रोः, कुञ्जरान् हस्तिन, नयति स्ववश प्रापयति । (पक्षे) स वीरो भवति । यः कामुकः, सप्रहारतः सुरताभिघातात् प्रतिपक्षस्य कु नायिकां जरां नयति । 'पापे कुत्सेषदर्थे कुरव्ययं स्त्री धरास्त्रियो.' । इति कोशः । तेनेदमाह दूती । सा प्रबलतरकामा । त्वमपि सुरतकुशल. । प्रचण्डसुरताभिघातेन यदि तामभिसारयसि तदा सा त्वदायत्ता भवति । सा तव रताभिलाषिणीति भावः । **धृतेति** ॥ धृतोरुकरवालसञ्चयोऽपि धृतमहाखड्गसमूहोऽपि, पर अत्यर्थ, अकाण्डे असमय एव, सम्पतन् शत्रुमभिगच्छन् पुरुष, महापद महती विपत्तिं, विग्रहेण युद्धेन लभते । (पक्षे) ऊरु सक्थि करः हस्तः वालसञ्चयः केशसमूहः अपिशब्दश्चार्थे धृतोरुकरवालसचयश्च, परमकाण्डे उत्कृष्टावसरे, सम्पतन् सगममृच्छन् पुरुष, महापद महासुख, विग्रहेण शरीरेण लभते । एतेनेदमाह दूती । यद्यपि त्व वीरः । सा कान्तान्तरेण तिष्ठति । असमयगमने तेन सह विमर्दस्स्यात् । तेन लोके ख्यातिर्नस्यात् । तस्मादवसरे तां अभिसरिष्यसीति भाव. । अथेदानी सप्रपञ्चाः । **राजसेनेत्यादि** । राजसेन राजसगुणेन, रहितः हीनः नरहितः पुरुषहितः ध्रुव, राजसे दीप्यसे । **अस्तीति** ॥ विशारदा प्रगल्भा, शारदाभ्रवत् शरन्मेघवत् विशदा निर्मला । विशदा स्पष्टा आत्मनीनमहिमानमहिमानरक्षणक्षमा आत्मीयमहिमयुक्तजनसहितभूसम्मानरक्षणार्हा धीरता बुद्धियुक्ता, धीर-

हिमानरक्षणक्षमा क्षमातिलक धीरता धीरता मनसि भूता भूतता भूतता च वचसि । साहसेन साहसेन कमला कमलालया यया जिता सा त्वदर्पणा दर्पणाकारविमलाशया शयाब्जनिर्जितकिसलया सलयांगुळिरिव विभ्रमेण गवाक्षशलाकाविवरं प्रति विलोकयन्ती लोकयन्त्रितविनाशा विनाशापमनुभवति दुःखानि । जीवनायक जीवनाय कमिव नाश्रयति

---

ना धैर्य पाण्डित्य वा, ते तव मनसि हृदये भूता निष्पन्ना भूतता भूम्या विस्तीर्णा ख्यातेति यावत् । भूतता सत्यता, तव वचसि वाचि । अस्तीति सम्बन्धः । **साहसेनेत्यादि** । साहसेन ईषद्धासयुक्तेन साहसेन साहसगुणेन, क सुख मलते धारयतीति कमला सुखोत्पादिका, कमलालया श्रीः यया जिता, सा त्वदर्पणा, त्वयि अर्पणं स्वदेहस्य मनसो वा समर्पण यस्यास्सा तादृशी, दर्पणवत् आदर्शवत् विमलाशया शुद्धचित्ता, शयाब्जेन हस्ताम्बुजेन निर्जित पराजित किसलय पल्लव यस्यास्सा तादृशी, विभ्रमेण सलयाङ्गुलिरिव नृत्तसहिताङ्गुळिरिव, भवन्ती, विभ्रमेण विलासेन, गवाक्षशलाकाविवरं जालशलाकारन्ध्र प्रति, विलोकयन्ती रथ्यायां गतागतकुतूहलिन· तव दर्शनेच्छया चक्षुः उल्लासयन्ती, लोकैः आप्तजनैः यन्त्रितः प्रतिषिद्धः विनाशः आत्मत्यागः यस्यास्सा, तादृशी, शाप विनाऽपि, दु खानि क्लेशान्, अनुभवति उपभुङ्क्ते। **जीवेत्यादि**। जीवनायक प्राणनाथ, जीवनाय जीवनार्थं, इह कः सुभग नाश्रयति? सर्वोऽप्याश्रयत्येवेत्यर्थः । कमिवेत्यपि पाठः । सुभग कमिव क पदार्थमिव नाश्रयति । अथवा कमिव आत्मानमिव नाश्रयति किम्? ।

सुभगम् । अन्यास्तावदासतामहमेव दासतां पुरतो भजामि मैत्र्यतो मैत्र्यतोऽस्तु । अञ्जसा रतस्सारतः किमपि कन्दर्पकं दर्पकं न चेत्तनोषि विशेषतो विशेषतः स्थिरमेव मरणम् । शठधियां शोधन यशोधन प्रेमहार्या महार्या समा सोत्कटाक्षैः कटाक्षैराविर्भूतदास्यास्तदाऽस्याः परिजनाः । कमलाकृतिनारीणां कमलाकृतिनारीणां भवता मुखं च मलिनितम् ।

---

**अन्या इति**। अन्यास्तावदासतां अन्याः स्त्रियः तिष्ठन्तु । अहमेव, पुरतः-अग्रतः दासतां भजामि । किमर्थ, मैत्र्यतः मैत्रीकरणहेतोः । अतः मैत्री अस्तु । **अञ्जसेत्यादि** । अञ्जसा तत्वतः रतः अनुरक्तः, त्व, सारतः हर्षात्, किमपि दर्पक दर्पकम्, कन्दर्पक काम, सुख न तनोषि चेत् विशेषतः निश्शेषेण, मरणमेव स्थिर निश्चित। अथेदानीं विकारभङ्गुराः । किञ्चिद्विशेषेणैव विशेषोन्नयन विकारभङ्गुरत्व नाम । **शठधियामित्यादि** । हेशठ हेगूढविप्रियकारिन्, धियां शोधन बुद्धीना निरूपक, यशोधन कीर्तिधन, प्रेम्णा हार्देन हार्या स्नेहग्राह्येत्यर्थः । महती आर्या चेति महार्या, मा लक्ष्मी. तया सहिता समा, एव भूता, सा, उत्कटाक्षैः उद्गतचक्षुर्भि यद्वा उत्कटैः अक्षैः इन्द्रियैः, कटाक्षैः अपाङ्गवीक्षणैश्च, तदा तस्मिन काले अस्याः, परिजनाः, आविर्भूतदास्याः प्रकटीकृतदासभावाः। अयमर्थः । अस्याः कटाक्षैः परिजनविलासिनः स्वीक्रियन्ते । तस्मात् शीघ्र गच्छेति भावः। **कमलेति** । क सुख 'मल धारणे' सुखधारिणी आकृतिः यस्य सः तेन। अरीणां शत्रूणां, कमलायाः लक्ष्म्याः आकृतिरिवाकृतिः यासा ताः ताद्दशीनां नारीणां, मुख, भवता, मलिनितम् । एतेनेदमाह दूती । स्वशत्रुस्त्रीणाम्मुख मलिनीकृतम् । अत एव कामुकान्तरात् भयं न गच्छ-

विश्वस्य विश्वस्य व्यवस्थां समासाद्यासमा साद्यानेककालं सङ्गीतरसिक तनुषे तनुषे कमनङ्गस्य पुष्पेषु पुष्पेषुरुजा तरसा जातरसा मन्दाक्षमन्दा क्षणमपि भ्रमन्ती मुह्यति । कामधुराधरेण कामधुराधरेण युक्ता रजोराजविशेषकेण विशेषकेण मुखेन्दुना तव हृदि लग्ना । म्रदिमाकरेण करेण स्वेदबिन्दुपयोधरेण पयोधरेण वक्षःफलकाञ्चनेन जिता-

---

सि तथा करिष्यसि च । भवानेव परं सुभगश्शूरः इति गमनप्ररोचनाय प्रोत्साहयतिं दूती । **विश्वस्येत्यादि** । विश्वस्य विश्वास कृत्वा, विश्वस्य जगतः, कृत्स्नस्य लोकस्य, व्यवस्था समासाद्य सम्प्राप्य, असमा असदृशरूपा सा पुष्पबाणजातरसा उत्पन्नानुरागा, उत्कटानुरागे सत्यपि मन्दाक्षेण लज्जया मन्दा नायकाभिसरणोद्यमशैथिल्यवती सती, अनङ्गस्य मदनस्य पुष्पेषुरुजा पुष्पबाणव्यथया, पुष्पेषु कुसुमास्तरणेषु क्षण, भ्राम्यन्ती, मुह्यति मूर्च्छति । अनेककाल चिराय, सङ्गीतरसिक, त्व पुन· तनुषे परदुःखमजानन् सन् स्वशरीरायैव, क सुख, तनुषे विस्तारयसि । त्वन्तु तस्याः प्रेमाणमजानन्नेवमुदास्से । सा तु त्वयि निवेशितभावा मन्मथेन अनिर्वचनीया दशां प्रापिता सशयितजीविता वर्तते । यदि विलम्बसे तर्हि सा म्रियेत तस्माज्झटिति याहीति दूतीवचनाभिप्रायः । **कामधुरेत्यादि** ॥ कामधुराधरेण कामधूर्वहेन, मधुराधरेण मनोज्ञाधरपल्लवेन, रजोराज मन्मथ· तस्य विशेषकेण अभिव्यक्तिकारिणा, विशेषकेण तिलकेन (उपलक्षितेन) मुखेन्दुना मुखचन्द्रेण, युक्ता, का नायिका, तव हृदि, हृदये लग्ना । **म्रदिमेत्यादि** ॥ मृदोर्भावः म्रदिमा तस्य आकरेण आवासदेशेन, वक्षःफलकाञ्चनेन उरस्स्थलपूजितेन, जितानाविलकाञ्चनेन निर्जि-

नाविलकाच्चनेन । कामदारुण मदारुणनेत्रा स्मरमयं रसमयंतं भवन्तं अदयं मदयन्ती परमकमितारं परमकामितारं वाञ्छति, हारिणा हारिणा स्तनकुम्भेन हारिणाक्षिरुचिहारिणा चक्षुषा च। अनन्तरं दुग्धार्णवनिमग्नमिव, स्फटिकगृहप्रविष्टमिव, श्वेतद्वीपनिविष्टमिव जगदामुमुदे। ततः क्रमेण विघटमानदलपुटकुमुदकाननकोशमकरन्दविन्दुसन्दोहसान्द्रनिष्यन्दास्वादमदमुदितमधुकरकुलकलरवमुखरितदिगन्तरे चन्द्रिकापानभरालसचकोरकामिनीभिरभिनन्दितागमे सुरतभरखिन्नपुळिन्दराजसुन्दरीस्वेदजलकणिकापहारिणि प्रवाति सायन्तने तनीयसि निशानिश्वासनिभे नभस्वति, कन्दर्पकेतुस्तमालिकामकरन्दसहायो वासवदत्तानगरमयासीत्। अथ स प्रवि-

---

तस्वच्छस्वर्णेन । उपलक्षितेनेति शेष. । एतेन नायिकायाः असदृश सौन्दर्यं प्रकटितम् । **कामेति** ॥ हे कामदारुणेति नायकसम्बोधनम् । स्मरमयं रसं, अयन्तं प्राप्नुवन्त । इटकिटकर्टाल्यत्र प्रश्लिष्टस्यायतेश्शतरि रूपम् । नत्विणः, तथासति यन्तमिति रूपापत्ते । परमकमितार उत्कृष्टकामुकम् । परम कं सुखं, यद्वा पर अक दु ख इता प्राप्ता । **हारिणेति** ॥ हारिणा हारवता । हारिणा मनोहरेण, हरिणाक्षिरुचिः सारङ्गनेत्रप्रभा तां हरतीति हारि । **अनन्तरमिति** ॥ दुग्धार्णवः क्षीराब्धिः । आमुमुदे समतुष्यत् । **तत इति** ॥ कोशः मुकुळ. । पुलिन्दाः म्लेच्छजातिभेदाः । प्रवाति वहति सति । वाते श्शतरि ङीँ रूपम् । निशा रात्रिः सैव ललना । **अथेति** ॥ कटकं नगर तस्य एकदेशे एकस्मिन् प्रदेशे । विनिहित

श्य कटकैकदेशे विनिहितमनिलोह्लसितनभस्तरुकुसुममञ्जरीभिरिव तर्जयन्तीभिरिव गगनपुरश्रियं पताकाभिरुपशोभमानं, कनकशिलपट्टाङ्कणप्रसृताभिः कर्पूरकुंकुमचन्दनैलालवङ्गपरिमळवाहिनीभिः तटनिकटस्फटिकशिलासुखनिषण्णानिद्रायमाणप्रासादश्वेतपारावताभिः प्रभ्रश्यत्तटविटपिसुमस्तबाकितसलिलाभिः, अनवरतमज्जदुन्मज्जद्युवतिघनजघनास्फालनोच्छ्वसितशीकरनिकरस्नपिततीरवेदिकाभिः, कर्पूरपूरपुलिनतलनिषण्णनिनदानुमीयमानराजहंसाभिः, विकचनीलोत्पलदर्शितकारण्डवचक्रवाकतिमिरशङ्काभिः, युवतिभिरिव सुपयोधराभिः, सुग्रीवयुद्धवृत्तिभिरिव कीलालस्नपितकुम्भकर्णाभिः, सागरकूलभूमिभिरिव सुन्दरीपादपरागशबलाभिः, नृपतिचित्तवृत्तिभिरिव कुल्यायमानकरिणीभिः, नदीभिरुपशोभितं, शिखरगतमुक्ताजालव्याजेन पुरयुवतिदर्शनागतं तारागणमिवोद्वहद्भिः उपान्तनिलीनाभिः काचकलशाकृतिं उद्व-

कर्पूराणां पूरः समूहः स एव पुलिन सैकत । कारण्डव. जलकुक्कुटः । पयोधरौ स्तनौ (पक्षे) पय जल । तस्य धराभिः । कीलाल रक्त (पक्षे) जल । कुम्भकर्णः नदीपक्षे पक्षिविशेषः । शबलाभिः मिश्राभिः । कुल्यः कुलभवः आयः आयतिः मानः पूजा गर्वो वा, करः राजदेयो भागः एतैर्युक्ता । (पक्षे) कुल्या कृत्रिमा सरित् तां आयमानाः आगच्छन्त्यः करिण्य. हस्तिन्यः । मुक्ताजाल मौक्तिकसमूहः । उपान्त समीप । काचः मृद्भेद । कलश

हन्तीभिः शिखिसंहतिभिरुद्भासितैः, प्रासादैरुपशोभमानं, अनवरतदह्यमानकृष्णागरुधूपमण्डलैः दर्शिताकालजलदसन्नाहं कचिद्गम्भीरमुरजरवाहूतसमदनीलकण्ठं, सायन्तनसमयमिव पतितलोकलोचनं, जनकयज्ञस्थानमिव दारोत्सुकितरामं मानुषमिवाभिनन्दितसुरतं, अरण्यमिवानेकसालशोभितं, निधानमिव कौतुकस्य, आस्थानमिव शृङ्गारस्य, कुलगृहमिव सकलविभ्रमाणां, सङ्केतस्थानमिव सौन्दर्यस्य, वासवदत्ताभवनं भवनन्दनप्रभावो ददर्श । द्रवसि द्रवसिद्धेरगादिता चपलाच पलायने किमेषा स्तवकस्तव कर्णतः पतितोऽयम् । सुरेखे सुकपोलरेखे सुरया सुरयाचिता श्रीस्त्वमसि । मत्ते कलहे कलहेमकाञ्चीदामकणितैः स्मरमिवाह्वयसि । मलये मलये

घटः । शिखिनः मयूराः । कृष्णागरुः कालागरुः । मुरजः मर्दलः । नीलकण्ठः मयूरः । लोकानां जनानां लोचनानि नयनानि यस्मिन (पक्षे लोकलोचनः आदित्यः । दारेषु भार्यायां उत्सुकित सञ्जातौत्सुक्यः रामः काकुत्स्थः यस्मिन् (पक्षे) जारेषु चोरनायकेषु (उदीच्यानां दजयोरभेदः रामाः स्त्रियः । सुरता देवत्व (पक्षे) सुरत निधुवन । सालाः वृक्षाः प्राकाराश्च । भवस्य शिवस्य नन्दनः पुत्रः, सुब्रह्मण्यः इति यावत् **द्रवसीति** ॥ द्रवसि शीघ्रं गच्छसि । एषा च, चपला चापल्यवती, अगदिताऽपि अनुक्ताऽपि, द्रवसिद्धेः क्रीडासिद्ध्यर्थं, किं पलायते धावति ? तव कर्णतः स्तवकः गुच्छः पतितः भ्रष्टः । **सुरेख इति** ॥ सुरेखेति कस्याश्चिन्नाम । सुरया सुष्टु रयः वेगः यस्यास्सा तादृशी । **मत्त इति** ॥ कलहे कलहनिमित्तम् । **मलय इति** ॥ मलयेति कस्याश्चि

प्सितं कुरु द्दशैवाधिगतासि । कलिके कलिकेतुमिमं शृणुमः कलवल्लकीविरुतं मे खला मेखला न भवति । त्वमेव मुखरतया खरतया च । त्रपते त्रपतेयमिति नागकुसुमोपहारेषु स्खलन्तीयम् । तव कैतवकैरलं कलिलो निश्वासैर्वेपथुरेवाशयं व्यनक्ति । वहतीवहतीरनङ्गलेखे तव वपुस्स्मरसायकानां तव च हारलता विहिता विहितायते । उत्कलिके तवोत्कलिकावहुले वदने वद नेत्रपयोजकान्ते किमुपमानमिन्दुरप्युपयाति । वसतीव सतीव्रते तव हृदि कोऽपि शतधा शतधारसारा वाचस्तवानुभूताः । केरळि केरळि ते करकाकरका-

---

नाम । अमलया निर्मलया । **कलिक इति** ॥ कलिकेति कस्याश्चिन्नाम । कलिकेतु कलहचिह्न । मे, मेखला काञ्ची, खला पिशुना दुष्टा वा न भवति । त्वमेव मुखरतया वाचालतया खरतया कार्कश्येन च खलाऽसि खलहृदयाऽसीति सम्बन्धः । **त्रपत इति** ॥ इय नागकुसुमोपहारेषु स्खलन्ती, अत्र पतेय इति, त्रपते लज्जते । **तवेति** ॥ कैतवकैः कपटैः अल व्यर्थम् । कलिल सम्बद्ध. । **वहतीति** ॥ हे अनङ्गलेखे, तव वपुः (कर्तृ) अनङ्गबाणानां मदनशराणा हतीः प्रहारान् वहतीव । विहिता उरसि निहिता, विहितायने विस्तारा भवति । **उत्कलिक इति** ॥ हे उत्कलिके! उत्कलिकाभिः उत्कण्ठाभिः बहुळे, नेत्रपयोजाभ्यां कान्ते तव वदने (विषये) इन्दुरपि चन्द्रोऽपि उपमान अयति किं वद, इति योजना । **वसतीति** ॥ सतीव्रते पतिव्रताचरिते तव हृदि कोऽपि पुरुषः वसतीव । कथमिति चेत् शतधार वज्र तद्वत् साराः तीक्ष्णाः, तव वाचः शतधा अनुभूताः, इति योजना । **केरळीति** ॥ हे केराळि! रळिते ललिते तव के शिरसि

लमेघखण्डतुलामुपयात्युल्लसितोत्फुल्लमल्लिकामालाहारी तव कुन्तलकलापः । कुन्तलिके कुन्तलालंकृते न च पुरगोपुरगोचराः श्रूयन्ते सङ्गीतध्वनयः । किमिव कल्पयसि क्षणमीक्षणमीलनादयि चटुलचटुलम्पटसखीजनाऽसि । सुरते सुरते स्तनता स्तनताडनेषु यत्सौख्यं लब्धं स्मरता स्मरतापनोदनं तदा केन वियुक्ताऽसि । किमुच्यते। महतो महतो दयितः स्मरति स्मरति प्रियं तव कौशलम् । नवनिशातनखराणां नखराणां स्मर जन्यां स्मरजन्यां कुरुते कुरुते न रुजम् । तव लोचनाभ्यां-लोचनाभ्यां फलिताखिलजनेक्षणदेशः क्षणदेशः किन्नपीयते । प्रियसखि मदनमालिनि मालिनि बिम्बाधरस-

---

कुन्तलकलाप , करकाणा वर्षोपलाना आकरैः आवासभूतैः, कालमेघखण्डैः तुलां, उपयाति कि इति सम्बन्धः । **किमिवेति** ॥ चटुल चञ्चल चटु-प्रियवचन तत्र लम्पटाः आसक्ताः सखीजनाः यस्यास्सा तादृशी, असि । **सुरत इत्यादि** ॥ हे सुरते शोभनक्रीडायुक्ते ! सुरते निधुवने, स्तनताडनेषु कुचमर्दनेषु, स्मरतापनोदन मदनबाधानिवर्तक यत् सौख्य लब्ध तत् स्मरता, स्तनता चाटुवाक्यमुखरेण, केन दयितेन वियुक्ताऽसि इति सम्बन्धः । **किमिति** ॥ महतः बृहतः महतः उत्सवात् । **नवेति** ॥ स्मरजन्यां कामजनकायाम् । कुरुतेन कुत्सितशब्देन सह दयितः नखानां रुजं कुरुते स्मेति सम्बन्धः । एतेन सुप्तनायिकोत्थानं तीक्ष्णनखाभिघातेनेति भावः । **तवेत्यादि** ॥ लोचनाभ्या भासमानाभ्या, क्षणदेशः चन्द्रः । **प्रियसखीत्यादि** ॥ हे मदनमालिनि ' अलिनि भ्रमरे, बिम्बाधरसङ्गत्या-

ङ्गत्यागेच्छया विरागं कुरु, मधुमदारुणमालवीकपोलकोमल-लोलदलमण्डलतया लतया को विशेषस्त्वया। कुरङ्गिके कल्पय कुरङ्गशावेभ्यश्शष्पांकुरम् । किशोरिके कारय किशोरं प्रत्यवेक्षाम् । तरलिके तरलय कृष्णागरुधूपपटलम् । कर्पूरिके पांसुलय कर्पूरधूलिभिः पयोधरभारम् । मातङ्गिके मानय मातङ्गशिशुधावनम् । शशिलेखे विलिख ललाटपट्टे शशिरेखाम् । केतकिके सङ्केतय केतकीमण्टपदोहलम् । शकुनिके देहि क्रीडाशकुनिभ्य आहारम । मदनमञ्जरि मञ्जीरय लतामण्डपम् । कदळिके विदळय कदळीगृहम् । शृङ्गारमञ्जरि कल्पय शृङ्गाररचनाम । सञ्जीवनिके वितर जीवञ्जीवकमिथुनाय मरीचपल्लवम् । पल्लविके पल्लवय कर्पूरधूलिभिः कृत्रिमकेतकीकाननम् । सहकारमञ्जरि सम्मार्जय श्रमोदकबिन्दून् सहकारसौरभव्यजनवातेन । मदनलेखे विलिख मदनलेखं मलयानिलस्य । मकरिके मकरा-

---

गेच्छया, विराग अप्रीति, मा कुरु । दल पत्रम् । मण्डल समूह । शष्प बालतृणम् । किशोर बालाश्व । तरलय प्रसारय । पांसुलय धूसर कुरु । मातङ्गशिशु गजशिशु । शशिलेखा चन्द्रलेखाम् । दोहळ वाञ्छाम् । सङ्केतय उपकल्पय । मञ्जीरय नूपुरयुक्त कुरु, तत्र सञ्चरेत्यर्थ । विदलय उद्घाटय । शृङ्गार. रसविशेषः सिन्दूर च । जीवञ्जीवक. चकोरः, मरीच कोलक व्यजन धवित्रम्, मदनलेख मान्मथाभिप्रायाविष्कारक पत्रम् । मकराङ्क

ङ्कशोभिते देहि मृणालांकुरं राजहंसशावेभ्यः । विलासवति विलासय मयूरकिशोरम् । तमालिके लेपय मलयजरसेन भवनवाटम् । काञ्चनिके विकिर कस्तूरिकाद्रवं काञ्चनमण्टपिकायाम । प्रवालिके सेचय घुसृणरसेन प्रवाळकाननम् । इत्यन्योन्यं प्रणयपेशलाः प्रमदाजनानामालापकथाश्शृण्वन् कन्दर्पकेतुः मकरन्देन समं तद्भवनं प्रविश्य, व्याकरणेनेव सरक्तपादेन, महाभारतेनेव सुपर्वणा, रामायणेनेव सुन्दरकाण्डचारुणा, जङ्घायुगळेन विराजमानां, छन्दोविचितिमिव भ्राजमानतनुमध्यां, नक्षत्रविद्यामिव गणनीयहस्तश्रवणां, न्यायविद्यामिवोद्योतकरस्वरूपां, बौद्धसङ्गतिमिवालङ्कारप्रसाधितां, उपनिषदमिव सानन्दां, रविप्रभामिव लोकमुद्द्योतयन्तीं, द्विजकुलस्थितिमिव चारुचरणां, विन्ध्यागिरिश्रियमिव सुनितम्बां, तारामिव गुरुकळत्रतयोपशोभितां, शतकोटिमू-

---

काम'। विलासय क्रीडय। घुसृण कुङ्कमम् । इतीत्यादि ॥ रक्तपादः 'तेन रक्त रागात्' इति सूत्रघटितः पाद, पर्व आदिसभादिपर्व, सन्धिश्च । सुन्दरः काण्डः नाळदण्ड' तद्वत् चारुणा । छन्दोविचितिः दण्डिकर्तृकं छन्दोनियामक शास्त्रम्। तनुमध्यानाम वृत्तविशेष. । नक्षत्रविद्या ज्यौतिषविद्या। न्यायविद्या तर्कविद्या। उद्योतकर. न्यायवार्तिककार. तस्य स्वरूपं ख्यातिः। बौद्धाना सङ्गतिमिव समाजमिव, अलङ्कार. धर्मकीर्तिकृतः प्रबन्धविशेष । चरण शाखाध्ययन पादश्च। नितम्ब कटकप्रदेशः कटिपश्चाद्भागश्च । गुरुः बृहस्पति.। कलत्र भार्या (पक्षे) कळत्रं श्रोणिभागः ।

र्तिमिव मुष्टिग्राह्यमध्यां, प्रियंगुश्यामासखीमिव प्रियदर्शनां, ब्रह्मदत्तमहिषीमिव सोमप्रभां, दिग्गजकरेणुकामिवानुपमां, रेवामिव नर्मदां तमालपत्रप्रसाधिताञ्च, अश्वतरकन्यामिव मदालसां, वासवदत्तां ददर्श॥ अथ तां विष्फारितेन चक्षुषा पिबतः कन्दर्पकेतोः जहार चेतनां मूर्च्छा। तमनु वासवदत्ता मुमूर्च्छ । अथ मकरन्दसखीजनप्रयत्नात् लब्धसंज्ञावेतावेकासनमलञ्चक्रतुः । अथ वासवदत्तायाः प्राणेभ्योऽपि गरीयसी सखी कलावतीनाम कन्दर्पकेतुमुवाच । आर्यपुत्र नायं विस्रम्भकथानां अवसरः । अतो लघुतरमेवाभिधीयते । त्वत्कृते याऽनया यातनाऽनुभूता सा यदि

---

शतकोटि. वज्रम् । प्रियङ्गुश्यामा तन्नाम्नी महादेवी तस्या. सखीमिव वयस्यामिव, प्रियदर्शनां प्रियदर्शनेति तत्सख्या नाम । सोमप्रभेति ब्रह्मदत्तमहिष्या नाम । अनुपमा कस्याश्चिद्दिक्करिण्या नाम । (पक्षे) अनुपमा असदृशी । नर्मदा क्रीडाप्रदाम् । तमालपत्र तापिञ्छदल (पक्षे) तिलकम् । अश्वतर. कश्चिद्विद्याधरराज । मदालसेति अश्वतरपुत्री । वासवदत्ता तन्नाम्नी शृङ्गारशेखरस्य पुत्री ददर्श इति सम्बन्ध. । **अथेति** ॥ विष्फारितेन विकसितेन । मूर्च्छा वैचित्यम् । तमनु तेनसह । 'तृतीयार्थे' इत्यनेनानोः कर्मप्रवचनीयत्वम् । जहार अपाहरत् । हरते. लिटि रूपम् । अलञ्चक्रतुः अलङ्कृतवन्तौ । आसने उपाविशतां इति यावत् । गरीयसी गुरुतरा । अतिस्निग्धतमेति यावत् । आर्यपुत्र नाथ, नावसर. असमय. । लघुतरमेव अल्पाल्पमेवाभिधीयते । त्वत्कृते त्वन्निमित्तम् । अनया, या यातना तीव्रवेदना, अनुभूता आसादिता । पत्र लेखनाधिकरणभूता काकला तदिवाचरति पत्रा-

नभः पत्रायते, सागरो यदि मेळामन्दायते, ब्रह्मा लिपिकरायते, भुजङ्गपतिर्वा कथकायते, तथाप्यनेकैर्युगसहस्रैरभिलिख्यते वा न वा । त्वया च राज्यमुज्झितम् । किं बहुना आत्माऽस्यास्सङ्कटे समारोपितः । येषाऽस्मत्स्वामिदुहिता प्रभातायां शर्वर्यां पित्रा यौवनातिक्रमशङ्किना हठेन विद्याधरचक्रवर्तिनो विजयकोतोः पुत्राय पुष्पकेतवे पाणिग्रहणाय दातव्येति निश्चिता। अनया चास्माभिस्सह सम्मन्त्र्यालोचितम् । अद्य यदि तं जनमादाय नागच्छति तमालिका, तदावश्यमेषाश्रयाश आश्रयितव्य इति । तदत्र यत्साम्प्रतं तत्र भवानेव प्रमाणमित्युक्त्वा विरराम । अथ कन्दर्पकेतुरपि भीतभीत इव प्रणयानन्दामृतसागरलहरीभिराप्लुत इव, वासवदत्तया सह सम्मन्त्र्य, मकरन्दं वार्तान्वेषणाय तत्रैव नगरे नियुज्य, भुजगेनेव सदागत्यभिमुखेन, सरित्पुलिनेनेव

यते । मेळामन्दा मषीधुर्या । लिपिकरः लेखकः । कथकः वक्ता । उज्झितं त्यक्तम् । सङ्कटे अनर्थे । हठेन बलात्कारेण तातु अनागस्मतिपुरस्कारेण, आश्रयाश अग्निः । साम्प्रतं युक्तम् । प्रमाणं निर्धारयिता । भीतभीतः अत्यन्तत्रस्तः । लहरीभिः ऊर्मिभिः, आप्लुतः समन्तात् सिक्तः । सम्मन्त्र्य आलोच्य, वार्तान्वेषणाय नगरे प्रचारयित्वा । स्वनगरान्तिस्यागमनाय, नियुज्य प्रेर्य, सदा सर्वदा गत्यां गमने अभिमुखः (पक्षे) सदागतिः वायुः तमभिमुखेन, तस्य नानाशनत्वादिति भावः । सरित्:

शुक्तिशोभितेन, विन्ध्यविपिनेनेव श्रीवृक्षलाञ्छितेन, हंसेनेव मानसगतिना, वनस्पतिनेव स्कन्धशोभितेन, वज्रेणेव इन्द्रायुधेन, मनोजवनाम्ना तुरगेण तया वासवदत्तया सह पुरान्निरगात्। ततः क्रमेण गव्यूतिमात्रमध्वानं गत्वा, नरजाङ्गलकवलनार्थं मिलितनिश्शङ्ककङ्ककुलसंकुलेन अर्धदग्धचिताचक्रसिमसिमायमान वसा विस्र विकटकटतृष्णाचटुलकटपूतनोत्तालतालुरवभीषणेन, शूलशिखरारोपितशङ्कितवर्णनासाच्छेदपतितरुधिर-

---

शम्बूकः (पक्षे) आवर्तविशेषः । श्रीवृक्ष· बिल्व (पक्षे) माहजिको गेमावर्तविशेपः । मानस तदाख्य तटाकः तत्र गति गमन यस्य (पक्षे) मानसस्य मनसः गतिरिव गति. यस्य स. तेन । स्कन्ध. प्रकाण्ड. 'अस्त्री प्रकाण्ड· स्कन्धस्स्यात्' इत्यमर । (पक्षे) अस । वज्र दम्भोळि तेनेव इन्द्रस्य यासवस्य आयुधेन प्रहरणेन । (पक्षे) इन्द्रायुधाभिधेन, तुरगेण अश्वेन । मनोजव इति वासवदत्ताधिष्ठिताश्वस्य नाम । निरगात प्रानिष्क्रत । इणो लुङि रूपम् । 'इणो गा लुङि' इति इणो गादेशः । **तत इत्यादि** ॥ गव्यूतिः क्रोशयुग 'गव्यूति स्त्री क्रोशयुगम्' इत्यमर । नरजाङ्गल नरमास तस्य कवलनार्थं भक्षणार्थम् मिलितः सङ्गत. । कङ्का· गृध्रा । सङ्कुलेन व्याप्तेन । चिता प्रेताधिष्ठित काष्ठमय शयनम् । सिमसिमेति शब्दानुकरणम । वसा मेद· । विस्र आमगन्धि । कटा. शवा. । कटपूतना भेनाळी । शङ्कितवर्णः चोर । "चोरश्शङ्कितवर्णश्च कुसुमाक्षः प्रकीर्तित" इति उत्तरतन्त्रम् । पटल समूह. । टङ्कार. शब्दानुकरण स· अस्य सञ्जात टङ्कारित । करकोटिः हस्ताग्रम् । कर्पर कपालम् । कोणपा राक्षसा पिशाचा वा । वम्भराळि. वनमाक्षिका । "मत्सरा मक्षिका च स्त्री वम्भराळिश्च

पटलपतनटङ्कारितकरकोटिकर्परकरालकोणपनृत्तुमुलेन, बभ्रमरालिकेलिसम्भारभरितभूमिभागबीभत्सेन, कटाग्निदह्यमानचटुलचटात्कारनृकरोटिटङ्कारभैरवेण, विवृतोल्कामुखमुखोज्ज्वलितज्वलनज्वालाजटिलेन आन्त्रतन्तुकलिलकपालप्रालम्ब डामरडाकिनीगणकृतकुणपविभागकोलाहलेन, आर्द्रसिरारचितविवाहमङ्गलप्रतिसरपिशाचमिथुनप्रदक्षिणीक्रियमाणाचताग्निना, शूलपाणिनेव कपालावलिशिवाबहुभूतिभुजगराजावरुद्धदेहेन, पुरुषातिशयेनेव अनेकमण्डलकृतसेवेन, दण्डकारण्येनेव कबन्धाधिष्ठितेन, चक्रवर्तिनेव अनेकनरेन्द्रपरिवृतेन त्रि-

---

सा स्मृता ।" इति कोशः । चटात्कारः शब्दानुकरणम् । नृकरोटिः नरकपालम् । भैरवेण भीषणेन । उल्कामुखा. अग्निमुखाः पिशाचभेदाः । आन्त्र पुरीतत् । प्रालम्बः हारः । सिरा धमनि. । प्रतिसरः मङ्गलहस्तसूत्रम् । शूलपाणिनेव शिवेनेव । कपालावलि. नृकरोटिश्रेणी । शिवा. जम्बुक्य , भूतिः भस्म अङ्गारविपक्व मांस वा । भुजः बाहुः गरः गळ. कण्ठ. । एतानदन्ति भक्षयन्तीति भूतिभुजगरादा. गृध्रादयः, तैः अवरुद्धाः आवृताः देहाः मृतदेहाः यस्मिन् तेन । उदीच्यानां दजयोरभेदः । (पक्षे) कपालावलिः ब्रह्मकपालमाला शिवा पार्वती बहुभूतिः अमित भस्म भुजगराजाः वासुकिप्रभृतयः आभरणभूतास्सर्पविशेषाः । तैः अवरुद्धः आक्रान्तः देहः वपुः यस्य सः तेन । पुरुषातिशयः सम्राट् । मण्डल श्वा (पक्षे) राष्ट्रं । कबन्ध. अपमूर्धकलेबरम् । (पक्षे) दनुकबन्धाख्योऽसुरः । नरेन्द्राः साधकाः मान्त्रिकाः (पक्षे) राजान । त्रिदिव. स्वर्गः । बलारिः मारादनशाल.

दिवेनेव सञ्चरद्वलारिणा, श्मशानवाटेन निर्गत्य निमिषमात्रादेवानेकशतयोजनमध्वानं गत्वा, पुनरपि प्रलयकालवेलामिव समुदितार्कसमूहां, नागराज्यस्थितिमिवानन्तमूलां, सुधर्मामिव स्वच्छन्दस्थितकौशिकां, सत्पुरुषसेवामिव श्रीफलाढ्यां, भारतसमरभूमिमिव दूरप्ररूढार्जुनां, पुलोमकुलस्थितिमिव सहस्रनेत्रोचितेन्द्राणीं, शूरपालवृत्तिमिव दर्शितगणिकारिकां, सज्जनसम्पदमिव विकसिताशोकसरळपुन्नागां, शिशुजनलीलामिव कृतधात्रीधृति, क्वचित् राघवचित्तवृत्तिमिव

पाक्षिविशेष : (पक्षे) बलारिः इन्द्रः । ईदृशेन श्मशानवाटेन गत्वा विन्ध्याटवीं प्रविवेश इत्यनेन सम्बन्धः । प्रलयकालवेला कल्पान्तकालावस्था । समुदित. सङ्घीभूतः अर्काणा तन्नाम्ना वीरुद्विशेषाणां समूह. यस्या ताम् (पक्षे) सम्यगुदित· अर्काणा द्वादशादित्याना समूहः यस्याम् । प्रलयकाले एकदैव समुदिता द्वादशादित्याः भवन्तीति पुराणप्रसिद्धिः । अनन्तानि अमितानि मूलानि कन्दाः यस्यां सा तां (पक्षे) अनन्तः शेषः मूल प्रधान. । सुधर्मा देवसभा । कौशिकाः घूकाः (पक्षे) इन्द्र । श्रीफलः बिल्वः (पक्षे) श्रीः लक्ष्मी· फल प्रयोजन तेन आढ्यां समृद्धाम् । अर्जुनः ककुभवृक्षः (पक्षे) पार्थ । पुलोमा शचीपिता । सहस्रनेत्रोचिताः अनेकमूलोचिताः इन्द्राण्यः शतावर्य· यस्यां ता (पक्षे) सहस्रनेत्रः इन्द्र । इन्द्राणी शची । शूरपालः तन्नामा कश्चिद्राजा । गणिकारिका अग्निमन्थः वृक्षविशेषः (पक्षे) दर्शिता गणि. वेश्या कारिका चित्तवृत्ति· यया सा । वेश्याप्रधानचित्तवृत्तिरित्यर्थः । अशोकाः सरळाः पुन्नागाश्च वृक्षविशेषाः । (पक्षे) अशोकाः शोकरहिताः सरळाः उदाराः पुन्नागाः पुरुषश्रेष्ठाः यस्यास्सा तां । धात्री

वैदेहीमयीं, क्वचित् क्षीरसमुद्रमथनवेलामिवोज्जृम्भमाणामृतां, क्वचिन्नारायणमूर्तिमिव स्वच्छन्दापराजितां, क्वचिद्वाल्मीकिसरस्वतीमिव दर्शितेक्ष्वाकुवंशां, क्वचिद्धार्तराष्ट्रसेनामिवार्जुनशरनिकरपरिवारितां, क्वचिन्नारायणमूर्तिमिव बहुरूपां, क्वचित्सुग्रीवसेनामिवोलूकद्रोणशकुनिसनाथां धार्तराष्ट्राञ्छिताञ्च, अम्लानजातिविभूषितामपि विरुद्धवंशां, दर्शिताभयामपि विभीषणां, सततहितपथ्यामपि प्रवृद्धगुल्मां,

आमलकीवृक्ष । (पक्षे) स्तनपायिका । वैदेही पिप्पली सीता च । अमृता हरीतकी (पक्षे) अमृत सुधा । अपराजिताः ओषधिविशेषा (पक्षे) अपराजिता पराजयरहिता । इक्ष्वाकुः कटुतुम्बी । वंशा. वेणव (पक्षे) इक्ष्वाको वंश. अन्वयः । अर्जुना ककुभवृक्षा । शराः काशा (पक्षे) पार्थस्य बाणा. बहवो रुपा. मृगाः यस्यां (पक्षे) बहूनि रूपाणि रामकृष्णाद्याकाराः यस्याम् पनसा. कण्टकिफला । नळा. पोटगळा । कुमुदानि कैरवाणि (पक्षे पनसनलकुमुदा वानरयूथपा । अविधवा सुमङ्गला । सिन्दूर बन्धूकः तिलकः रक्तबीज (पक्षे) सिन्दूर धातुविशेष । तिलक विशेषकम । प्रवाला पल्लवाङ्कुरा (पक्षे) प्रकृष्टा बाला चिकुराः । उलूकाः कौशिकाः द्रोणा काकाः । शकुनय पक्षिण (पक्षे) उलूकः शकुनिपुत्र । द्रोणः भारद्वाज शकुनि सौबल. । धार्तराष्ट्रा हंसविशेषाः (पक्षे) धार्तराष्ट्रा. दुर्योधनादयः अम्लानजाति उत्कृष्टजाति. तया विभूषितामपि मण्डितामपि, विरुद्धवंश अननुरूपान्वयामिति विरोध । परिहारस्तु, अम्लानः पुष्पवान करण्टक विशेष , जातिः मालती । विभिः पक्षिभिः रुद्धाः छादिताः वंशा. वेणव यस्या ताम् । दर्शित अभय अभीति यया सा तामपि विभीषणां विशे

षट्पदव्याप्तामपि द्विपदानाकुलां, द्विजकुलभूषितामपि न कुलीनवंशां, विन्ध्याटवीं, प्रविवेश । अत्रान्तरे तयोर्निद्रामादाय निशा आजगाम । ततः क्रमेण च कालकैवर्तकेन तमिस्रानांवं प्रक्षिप्य गगनमहासरसि सजीवशफरनिकर इव ह्रियमाणे तारागणे सन्ध्यारक्तांशुके, विषमप्ररूढबिसलताशरयन्त्रानुगतशतपत्रपुस्तकसनाथे मकरन्दबिन्दुसन्दोहनिर्भरपानमत्तमधुकरमञ्जुरवैः स्वधर्ममिव पठति विकचकमलाकरभिक्षौ, कृषीवलेनेव कालेन तिमिरबीजनिकरेष्विव मधुकरेषु मधुरसकर्दमितपरागपङ्केषु घनघटमानदलपुटेषु कुमुदाकरक्षे-

---

षेण भयङ्करा इति विरोधः । परिहारस्तु, अभया हरीतकी । सतत अनारत हित पथ्य यस्यास्सा तादृशीमपि प्रवृद्धगुल्मां अभिवृद्धगुल्मरोगवर्तामिति विरोधः । परिहारस्तु, पथ्या हरीतकी । गुल्मः वीरुत्सञ्चयः । षट्पदैः षड्भिः चरणैः व्याप्तामपि, द्विपदानाकुलां द्वाभ्यां पदाभ्यां अव्याप्तामिति विरोध । परिहारस्तु । षट्पदैः भ्रमरैः व्याप्तां द्विपानां गजानां दानेन मदजलेन आकुलां निबद्धाम् । द्विजकुलैः ब्राह्मणवंशैः भूषितामपि, नकुलीनवंशां अनभिजातान्वयवर्तीमिति विरोधः । परिहारस्तु, द्विजा पक्षिणः । कौ भूमौ लीनाः वंशाः वेणुस्तम्बाः यस्या सा तादृशी न भवतीति न कुलीनवंशा । अत्युन्नतवेणुसहितेति यावत् । **तत इति** ॥ कैवर्तकः धीवरः । शफराः मत्स्याः । शरयन्त्र सरस्वतीपीठम् शतपत्र सरसिजम् । सनाथे सहिते । कमलाकरः पद्माकर एव भिक्षुः सन्यासी ब्रह्मचारी वा । कृषीवलः क्षेत्राजीवी । उप्यमानेषु प्रक्षिप्यमाणेषु वपे-

लेपूप्यमानेषु, रजोमुर्मुरसनाथमधुकरपटलधूमानुगतोद्दण्डपुण्डरीकव्याजाद्धूपमिव भगवते किरणमालिने प्रयच्छन्त्यां कमलिनीतापस्यां, रजनीवधूकरद्वयोच्चलितपतत्प्रभातमुसलाहतिक्षतान्तरे उलूखल इव चन्द्रमण्डले, खण्डनविकीर्णेषु तण्डुलेष्विव तारागणेषु निमीलत्सु, सन्ध्याताम्रमुखेन वासरवानरेण नभस्तरुमारुह्य शाखाभ्य इव कम्पिताभ्यो दिग्भ्यो विकचप्रसूननिकर इव तारागणे फल इवेन्दुमण्डले पतति, तारातण्डुलशबलितनभोऽङ्गणं स्फुरदरुणाकिरणचूडाचक्रचारुवदने वासरकृकवाकौ चरितुमवतरति, मत्सङ्गमादतिप्रवृद्धो वारुणीसङ्गमाद्द्विजपतिरेषपततीति हसन्त्यामिवाखण्डलाशायां अरुणकेसरिखरनखरपातनिहतान्धकारकरीन्द्ररुधिरधाराभिरिवोदयगिरिशिखरगैरिकनिर्झरधाराभिरिव त्वङ्गत्तुरङ्गखरखुरपुटपाटितपद्मरागच्छटाभिरिव उदयाचलकूटकोटिप्ररूढजपाकुसुमकान्तिभिरिव पूर्वगिरिकेसरिचरणतलाहतमत्तमातङ्गोत्तमाङ्गविगलदसृग्धारासारिणीभिरिव त्रिभुवनकार्यसम्पादनातुररागरसैरिव रक्तमण्डले, ताराकुमुदवनग्रहणाय प्रसा-

---

कर्मणि शानच् । मुर्मुरः तुषाग्नि । धूप ससौरभो धूमः । प्रयच्छन्त्यां ददानायाम् । मुसल अयोग्रम् । उलूखल उदूखलम् । शबलित करम्बितम् । कृकवाकुः कुक्कुटः । आखण्डल. इन्द्रः । त्वङ्गन्तः क्षुभ्यन्तः । कूटः शिखर । जपा रुद्रपुष्प । केसरी सिंहः । असृक् रक्त । फणा - स्फटा ।

रितहस्त इव कुंकुमारुणैः किरणैः, कनकदर्पण इव प्राचीविलासिन्याः, पूर्वाचलभोगीन्द्रफणोपले, गगनेन्द्रनीलतरुकिसलये, नभोनगरप्राग्द्वारकनकपूर्णकुम्भे, तप्तलोहकुम्भाकारे, प्राचीकुमारीललाटतटघटितकुंकुमतिलकबिन्दौ सन्ध्याबाललतैककुसुमे मञ्जिष्ठापट्टसूत्रपिण्डसदृशे सन्ध्यारुणसूत्रग्रथितप्राचीवधूकाञ्चीकाञ्चनदीनारचक्र इव, कुमार इव संहृततारके, पद्मनाभ इवोल्लसत्पद्मे, अध्वग इव च्छायाप्रिये, शक्र इव गोपतौ, उदयगिरिधातुरागारुणदिग्गजपादतलानुकारिणि, प्रभूततिमिरतस्करे, समुदयमारोहति भगवति भास्वति, मञ्जिष्ठानिकर इव दिग्गजेषु, महाभारतरुधिरोद्गार इव कुरुक्षेत्रेषु, सुरधनुःकान्तिविलेप इव जलदच्छेदेषु, काषायपट इव शाक्याश्रमशाखासु, कौसुम्भराग इव ध्वजपटपल्लवेषु, फलपाक इव कर्कन्धूषु, कुंकुमरस इव व्योममहासौधाङ्गणे, सञ्चरदरुणयवनिकापट इव कालमहानटस्य,

उपलः रत्न । लोहकुम्भः अयोघटः । काञ्ची रशना । दीनार नाणकविशेषः रशनासुखभागे शोभार्थं मुद्रितनाणकादय प्रत्युप्यन्ते इत्येतदनुभवसिद्ध । तारका. ऋक्षाणि तारकाख्योऽसुरश्च । पद्मानि तामरसानि पद्मा लक्ष्मीश्च । छाया तन्नाम्नी स्त्री प्रिया दयिता यस्य । (पक्षे) प्रिया छाया अनातपः यस्य । 'वा प्रियस्य' इत्यनेन प्रियशब्दस्य परनिपातः । गौः किरण. स्वर्गश्च । शाक्याः बौद्धाः । पटपल्लवेषु वस्त्राग्रेषु । कर्कन्धू बदरी ।

प्रवाळभङ्गारुणे प्रसरति वालातपे, क्षणेन चाटुचटुलचक्रव कहृदयकोशसन्तापहरणादिव दहनप्रतापप्रवेशादिव दिननाथ कान्तोपलसङ्गादिवोष्णिमानमुष्णरश्मेराश्रयति रश्मिसंचये कन्दर्पकेतुस्सर्वरात्रजागरणवशादाहारशून्यपरवशशरीरतय निश्चेतनोऽनेकयोजनशताध्वभ्रमणखिन्नो वासवदत्तयाप्येवं विधया सह लतागृहे मन्दमारुतान्दोलितकुसुमपरिमल लुब्धमुग्धमुखरपरिभ्रमद्भ्रमरझङ्कारमनोहरे तत्कालसुलभय निद्रया गृहीतो निष्पन्दकरणग्रामस्सुष्वाप । ततो वणि जीव प्रसारिताम्बरे, महादावानल इव सकलकाष्ठोद्दीपिनि कल्पवृक्ष इव सर्वाशाप्रसाधके, पतङ्गमण्डले मध्यं नभ स्स्थलस्य आरूढे, कन्दर्पकेतुः प्रबुद्धः प्रियया विन कृतं लतागृहमवलोक्य चोत्थाय तत इतो दत्तदृष्टिः, क्ष विटपिषु, क्षणं लतान्तरेषु, क्षणं अधःकूपेषु, क्षणं ऊर्ध्व तरुशिखरेषु, क्षणं शुष्कपर्णराशिषु, क्षणं आकाशतलेए क्षणं दिक्षु, क्षणं विदिक्षु च, भ्रमन्ननवरतदह्यमानहृदय विललाप । हा प्रिये वासवदत्ते देहि मे दर्शनं । कृतं परि

---

यवनिका तिरस्करिणी, प्रवाळ विद्रुम । चाटूनि प्रियवाक्यानि । दि नाथकान्तोपल सूर्यकान्तदृषत् । करणग्राम इन्द्रियवर्गः । **तत इत्यादि** अम्बर आकाश. वस्त्र च । काष्ठाः दिश. एधाश्च । आशा दिश. मनोरथा विललाप विलापमकरोत् । **हेति** ॥ कृत अलम् । अन्तर्हिता छन्ना । त्वत्कृ

हासेन । अन्तर्हितासि । त्वत्कृते यानि दुःखान्यनुभूतानि तेषां त्वमेव प्रमाणम् । हा प्रियसख मकरन्द पश्येदं दैवदुर्विलसितम् । किं पूर्वम्मया कृतमनवदातं कर्म, अहो विपाको नियतेः, अहो दुरतिक्रमा कालगतिः, अहो ग्रहाणामतिकटुकटाक्षपातनम्, अहो विसदृशता गुरुजनाशिषाम्, अहो दुस्स्वप्नानां दुर्निमित्तानाञ्च फलं, सर्वथा न कश्चिदगोचरो भवितव्यानां, किं न सम्यगागमिता विद्या, किं यथावदनाराधिता गुरवः, किन्नोपासिता वह्नयः, किन्नप्रदक्षिणीकृतास्सुरभयः, किन्नकृतं शरण्येष्वभयम्, इति बहुविधं विलपन् मरणेच्छुः दक्षिणेन काननं निर्गत्य, नव्यनळनळदनळिनीनिचुळविदळवकुळचिरिबिल्ववहुळेन, प्रचुरविरचितविविधोटजकुटजरुद्धोपकण्ठेन, सोत्कण्ठभृङ्गराजसुन्दरीकृता-

---

त्वदर्थे । दुर्विलसित दुश्चेष्टाम् । अनवदात अशुद्धम् । विपाकः परिणामः । ग्रहाणां सूर्यादिनवग्रहाणाम् । विसदृशता वैसादृश्य । भवितव्याना अवश्यप्राप्तव्यानां विधीनाम् । विद्या ब्रह्मविद्या, सम्यक्, आगमिता न किं सद्गुरुसकाशात् यथावत् न शिक्षिता किं इति वितर्कः । अवैधस्याध्ययनस्यानर्थास्पदत्वात् । तदुक्तं 'यदृच्छया श्रुतो मन्त्रः छन्नेनाथ च्छलेन वा । पत्रेक्षितो वा व्यर्थस्स्यात्प्रत्युतानर्थदो भवेत्' इति । सुरभयः धेनवः । शरण्येषु रक्षितव्येषु । नळाः तृणविशेषाः । नळद् लामज्जक । निचुळः मृदुफला । विदलः वेतसः । चिरिबिल्वः नक्तमालः । उपकण्ठ अन्तिकप्रदेशः । भृङ्गराजसुन्दरी भ्रमरी ।

स्वादविततचूतव्रततिव्रातावरणवरुणतरुस्कन्धसन्नद्धभृङ्गगोळेन, गोलांगूलभग्नगलन्मधुपटलरसासारशीकरसिक्ततरुतलेन, प्रवृद्धनारिकेळकङ्केळिराजताळीतालतमालहिन्तालपुन्नागकेसरनागकेसरघनसारेण मल्लिकाकेतकीकोविदारार्कपर्णजम्बूबीजपूरजम्बीरगुल्मगहनेन पवनसंवाहितानेकपनसविटपिविटपेन, दात्यूहकुहकुहारावभरितनदीतटनिकुञ्जपुञ्जेन, पुञ्जितोत्कण्ठकलकण्ठाध्यासितसहकारपल्लवेन, कुक्कुटकुटुम्बसंवासितोत्कटानेकविटपेन, कोरकनिकुरुम्बरोमाञ्चितकुरवकराजिना रक्ताशोकपल्लवलावण्यविलिप्यमानदशदिशा, प्रविकसितकेसरकुसुमरजोविसरधूसरितपरिसरेण, परागपुञ्ज पिञ्जर सिन्दुवाररज्यमानमधुकरमञ्जु शिञ्जितजनितजनमुदा, लवङ्गचम्पकमधूककृतमाललोध्रकर्णिकारकद-

---

व्रातस्समूहः । भृङ्गगोळः भृङ्गसमूहः । गोलाङ्गूल. मर्कटविशेष । कङ्केळिः अशोकः । राजताळी ताळीविशेषः, तालादयो वृक्षविशेषाः । कोविदारः चमरिका । अर्कपर्णःवसुकः । ‘ अर्काह्ववसुकास्फोटगणरूपविकीरणाः । मन्दारश्चार्कपर्णे ’ इत्यमर. । बीजपूर मातुलुङ्ग. । जम्बीरः दन्तशठ. । सवाहिताः मन्द चलिताः । विटपी वृक्ष । दात्यूहः पक्षिविशेषः । निकुञ्जः कुञ्जः । पुञ्जिता अभिवर्धिता उत्कण्ठा औत्सुक्य येषा ते तादृशै कलकण्ठैः पिकैः कोरका कलिका । रोमाञ्चिता पुलकिता । केसरा वकुलवृक्षाः । विसरः विस्तारः । परिसर समीपदेश । मधूक. गुडपुष्प । कृतमालः आरग्वध. ।

म्बकदम्बकेन, मदजलमेचकितमुचुकुन्दस्कन्धकाण्डकष्यमाननिश्शङ्ककरिकटविकटकण्डूतिना, कतिपयदिवसप्रसूतकुक्कुटीकुटीकृतकोटरेण, चटकसंचार्यमाणचटुलचाटचाटकैरक्रियमाणचाटुना, सहचरीसहचरणचुञ्चुचतुरचकोरचञ्चुना, शैलेयसुगन्धिशिलातलसुखशयितशशशिशुराशिना, शेफालिकाशिफाविवरविस्रब्धवर्तमानगौधेयराशिना, निरातङ्करंकुनिकरेण, निराकुलनकुलकेलिना, कलकोकिलकुलकबळितचूतकलिकोद्गमेन, सहकारारामरोमन्थायमानचमरीयूथेन, श्रवणहारिसनीडगिरिनितम्बनिर्झरनिनादश्रवणोत्सुकनिद्रानन्दमन्दायमानकरिकुलकर्णताळदुन्दुभिध्वनिना, समासन्नकिन्नरीगीतिश्रवणरममाणरुरुविसरेण, क्षतहरितहरिद्राद्रवरज्यमानवराहपोतपोत्रपाळिना, गुञ्जापुञ्ज-

मुचुकुन्द वृक्षविशेषः । कटः गण्डस्थल, कण्डूति खर्जूः । कुटी निवासगृहं । चटक. कलविङ्क । चाटकैर. चटकायाः अपत्यम् । सहचरी भार्या सहचरण सहभक्षणम् । चञ्चूः त्रोटि । शैलेय ओषधिविशेष. । शशः अतिवेगेनोत्पतनशीलः क्षुद्रजन्तुविशेषः । शेफालिका सुवहा । गौधेयः गोधापत्यम् । रङ्कुः हरिणविशेष । नकुलाः बभ्रव. । रोमन्थः चर्वितस्याकृष्य पुनश्चर्वणम् । रोमन्थ वर्तयन् रोमन्थायमानः ‘ कर्मणो रोमन्थतपोभ्या वर्तिचरोः ’ इत्यनेन क्यङ् । सनीड समीपदेशः । नितम्बः कटक । निर्झरः गिरिनदीप्रवाहः । करी गजः । समासन्नाः सन्निहिता । रुरु मृगविशेषः । हरिद्रा रजनी । पोतः शिशुः । पोत्रं नासाग्र । जालकाः पक्षिविशेषा. । दशाः

गुञ्जज्जालकजालेन, दंशदंशनकुपितकपिपोतपेटचपेटकपाटितपाटलीपुटकीट्टसङ्घेन, कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गमदच्छटाच्छुरितचारुकेसरभरभासुरकेसरिकदम्बेन, महासागरकच्छोपान्तेन, कतिपयदूरमध्वानं गत्वा, अतिचपलवारिप्रचयप्रहतप्रपाततया ताण्डवोद्दण्डदोष्षण्डखण्डपरशुविडम्बनापण्डितं, वारुणविजयपताकाभिरिव, शेषकुलनिर्मोकमंजरीभिरिव, सुधासहचरीभिरिव, ज्योत्स्नासहोदरीभिरिव, शशाङ्कमण्डलपरमाणुसन्ततिभिरिव, लक्ष्मीलीलाऽऽतर्पणधाराभिरिव, जलदेवताकुचचन्दनविच्छित्तिभिरिव, फेनराजिभिरुपान्तरमणीयम्, अपरमिव गगनतलमवनितलमवतीर्णं, अच्छजलादुच्चलच्छीकरनिकरेण, नभश्चरान्मुक्ताफलैरिव विलोभयन्तम्, अभयाभ्यर्थनागतानेकपक्षति-

---

वनमक्षिकाः । पेटः समूहः । चपेटक. हस्तताडनं । पाटित· विदारित । कुलिश वज्र । खराणां कठिनानां नखराणां नखानां प्रचय. समूहः । छुरिताः रूपिताः । केसरिणः सिंहाः । कच्छोपान्तेन जलप्रायनीरसमीपप्रदेशेन, प्रपात. कूल । खण्डपरशु. रुद्रः । विडम्बना अनुकरण । वरुणस्येमाः वारुण्यः तादृश· विजयपताकाः विजयख्यापककेतुस्तम्भाग्रनिबद्धवस्त्राणि ताभिरिवेत्युत्प्रेक्षा । निर्मोकः सर्पत्वक् । सुधा अमृत तस्य सहचरीभिरिव सखीभिरिव, ज्योत्स्ना चन्द्रिका । आतर्पण धवळवर्ण आलेपनद्रव्यम् । अच्छ निर्मलम् । शीकराः जलकणाः । नभश्चरा· आकाशगामिनो देवा । विलोभयन्त प्रलोभयन्तम् । पक्षति पक्षमूलम् ।

क्षितिधरभरितकुक्षिभागं, सगरसुतविसरसमुत्खातं, उत्खातपारिजातं, अभिजातमणिरत्नाकरं, करिमकरसंकुलं, शकुनिकुलकबलनाभिलाषसञ्चरन्नक्रचक्रं, स्तिमिततिमितिमिङ्गिलकुलं, कदलीवनवाटविलुलितैलालवलीलवङ्गमातुलुङ्गगुल्मगहनं, ऊर्मिमारुतमर्मरिततरलतरोत्तालतालीवनचरितजलमानुषमिथुनमृदितपुलिनबालशैवालं, प्रवालांकुरकोटिपाटित मुखखिन्नशङ्खनखशिखरविलिखिततटरेखं, खगेश्वरगोत्रपत्ररथपटलकलिलसलिलं, अद्याप्यनिर्मुक्तमन्दरमथनसंस्कारमिवावर्तभ्रान्तिभिः, सापस्मारमिव सितफेनसञ्चयैः, ससुरागन्धमिव एलापरिमलैः, सघोषमिव गर्जितैः, सखेदमिव नागनिश्वासैः, सभ्रूभङ्गमिव तरङ्गैः, सालानस्तम्भमिव रामसेतुना, कुम्भीनसीकुक्षिमिव लवणो-

---

क्षितिधराः पर्वताः । समुत्खातं अवदारितम् । करिणः जलगजाः । मकराः ग्राहाः मत्स्यविशेषा वा । नक्राः ग्राहाः । स्तिमिताः निश्चलाः । तिमिङ्गिलाः बृहन्मत्स्याः । विलुलित मिश्रम् । गहन तीरकाननम् । मर्मरिताः मर्मरशब्दवत्त्वं आपादिताः । उत्तालाः अत्युन्नताः । शैवाल जलनीली । प्रवालाः विद्रुमाः । पत्ररथाः पक्षिणः । पटल समूहः । कलिल व्याप्त । मथनसंस्कार. विलोडनानुभवनिबन्धना वासना । आवर्त. अम्भसां भ्रमः । अपस्मारः फेनोद्गारस्वभावः स्मृतिभ्रंशकः रोगविशेषः । नागाः सर्पाः । आलानस्तम्भः गजबन्धनसाधन दारु । कुम्भीनसी काचन राक्षसी । लवण.

त्पत्तिस्थानं, व्याकरणमिव स्त्रीनदीकृत्यबहुळं, राजकुलमिव दृश्यमानमहापात्रं, हस्तिबन्धमिव वारिगतानेकनागमुच्यमानशूत्कारं, विश्वामित्रपुत्रवर्गमिव अम्भोजचारुमत्स्योपशोभितं, सत्पुरुषमिव गोत्रातिशयं, साधुमिवाच्युतास्थितिरमणीयं, सुनृपतिमिव सज्जनक्रमकरं, कृतमन्युमिव करतोयाप्लुतमुखं, विरहिणमिव चन्दनोदकसिक्तं, विलासिनमिव नर्मदानुगतं, राशिमिव समीनकुळीरं, शृङ्गारिणमिवानेकमुक्तालंकृतं, उद्धृतकालकूटमपि प्रकटितविषराशिं, अतिवृद्धमपि सुंन्दरीवृतोपकण्ठं, सुरोत्पत्तिस्थानमप्यसुराधिष्ठितं,

---

तन्नामा कुम्भीनसीपुत्रः। व्याकरण शब्दशास्त्रम्। स्त्रीनदीकृत्यबहुल स्त्रीभूतनदीकार्यप्रचुर (पक्षे) स्त्री स्त्रीप्रत्ययः, नदी नदीसंज्ञा, कृत्याः कृत्यप्रत्यया., बहुळ बहुळग्रहण च। राजकुल राजगृहम्। महापात्रं महामात्य·। (पक्षे) तीरद्वयान्तरम्। हस्तिबन्धः गजबन्धनस्थान । वारि गजबन्धनसाधनरज्जुः शृङ्खला वा। अम्भोज तामरसम्। (पक्षे)अम्भोजः चारुः मत्स्यः इति विश्वामित्रपुत्राणां नामानि। गोत्र· पर्वतः कुल च । अच्युतस्य श्रीमन्नारायणस्य स्थित्या । (पक्षे) अच्युता च्युतिरहिता । सज्जाः सावधानाः नक्राः अवहारा. मकराः मत्स्यविशेषाः यत्र (पक्षे) सज्जनानां क्रमकरः व्यवस्थाकरः। कृतमन्युमिव कृतकोपमिव। करतोया सदानीरा महानदी । तया आप्लुत मुख नदीसमुद्रसङ्गमस्थल यस्य त (पक्षे) कर. हस्तः। तोय जलम्। चन्दना काचन नदी (पक्षे) श्रीखण्ड. । नर्म क्रीडासुख ददातीति नर्मदा. प्रमदा ताभिः अनुगत (पक्षे) नर्मदा रेवानदी। विष जलमिति विरोधपरि-

जलधिमपश्यत् । अचिन्तयच्च— अहो मे कृतापकारेणापि विधिना उपकृतिरेव कृता । यदयं लोचनगोचरतां गतः समुद्रः । तदत्र देहं त्यजामि । यद्यप्यनातुरस्यात्मत्यागो न विहितः । तथाऽपि नः कार्यः । न खलु सर्वस्सर्वं कार्यमेव करोति । इहासारे संसारे केन किन्नाम न कृतम् । तथाहि । गुरुदारहरणं द्विजराजोऽकरोत् । पुरूरवाः ब्राह्मणधनतृष्णया विननाश । नहुषश्शक्रकळत्रदोहळी भुजङ्गतामयासीत् । ययातिः कृतपुरोहितसुतापाणिग्रहणः पपात । सुद्युम्नः स्त्रीमयएवाभवत् । सोमकस्य प्रख्याता जगति जन्तुवधनिर्घृ-

---

हार. । सुन्दरी निद्रुमलता, लताविशेषो वा । सुरा अमृतम् । **अचिन्तयदित्यादि ॥** अनातुरस्य रोगहीनस्य। द्विजराज चन्द्र ब्राह्मणोत्तम इत्यपि प्रतीयते। गुरोः बृहस्पते आचार्यस्येत्यपि । दारान् पत्नीं तारामिति यावत् । पुरूरवा॰ तन्नामा कश्चन चन्द्रवंश्यो राजर्षि. । ब्राह्मणधने तृष्णया लोभेन, विननाश मृतः । पुरूरवा॰ पूर्वां दिश जेतु गच्छन् केनाप्याहृतप्रभूतधनेन विप्रेण यज्ञे निमन्त्रितो लोभाक्षिप्तस्तद्धन जिहीर्षुस्तच्छापान्नष्ट । तस्मिन् मृते स विप्रो नृपं विना प्रजाः न विद्येरन् स्थितौ इति ज्ञात्वा तदायुषा राजर्षिमायुर्नामानमजीजनदिति कथा । नहुष॰ चन्द्रवंश्यः कश्चिद्राजा । शक्रकलत्रे इन्द्राण्या दोहली अभिलाषी । भुजङ्गता सर्पत्व । ययातिः नहुषपुत्रः राजर्षि॰, कृत पुरोहितस्य असुरगुरो. शुक्रस्य सुतायाः पुत्र्याः देवयान्याः. पाणिग्रहणं विवाह. येन स । सुद्युम्नः वैवस्वतमनोः पुत्रः । स्त्रीमय महिलाकृतिः । भवशापात् तथा अभवदिति कथा । सोमकस्य तदाख्यस्य राजर्षेः । जन्तो. तन्नाम्नः पुत्रस्य वधेन निर्घृणता नैर्घृण्य

णता । पुरुकुत्सः कुत्सितएवाभवन् । कुवलयाश्वोऽश्वतरकन्यामपि जगाम । नृगः कृकलासतामगमत् । नलः कलिनाऽभिभूतः । संवरणो मित्रदुहितरि विक्लवतामगमन् । दशरथः अभीष्टरामोन्मादेन मृत्युमवाप । कार्तवीर्यो ब्राह्म-

---

(पक्षे) जन्तवः शरीरिणः । सोमकस्य शतपत्नीष्वेकस्यामेव जन्तुसञ्ज्ञः पुत्र उत्पन्नः, अन्यासां वैमनस्यमालोच्य कथम्मे सुता बहवो जायेरन्निति पृष्टेन गुरुणा चोदितस्सन् स राजा जन्तुं हत्वा यागं विहितवान् तेन सर्वा अपि सप्रजा आसन्निति महाभारते । एतेनाव लयो महापातकिनो वर्णिताः । पुरुकुत्स तन्नामा राजा । कुत्सितः निन्दितः । अयं पुरा तपश्चरन् नर्मदायां स्नानं कुर्वन्कामप्यङ्गनामालोक्य कामाविष्टो नीतिमुत्ससर्ज । कुवलयाश्वः कश्चिद्राजा, अश्वतरकन्यां अश्वतराख्यनागस्यकन्यां मदालसां । अश्वतर गोखर तस्य कन्यामित्यपि प्रतीयते । अज्ञानादपि सञ्जातं पातकं फलति ध्रुवं । इति प्रदर्शयन्नाह । **नृग इति** ॥ नृगः कश्चिद्राजा, कृकलास सरट. 'सरट' कृकलासः स्यात्' इत्यमरः । 'नृगेण पुष्करे तीर्थे गावो दत्ता द्विजातये । तत्राज्ञानात् द्विजस्यैका कपिला मिलिताऽभवन् । अपराधादतस्तेन शप्तस्सरटतामयात् ॥' इति भारते । नलः नैषधः त, कलिः तुरीययुगाधिदेवता । अभिभूतवान् आक्रान्तवान् । 'कालेन कलिना सोऽपि पुण्यश्लोकोऽतिपीडितः । इति सस्फोरयन्नूचे नलाख्यानं पुरातनम् ।' संवरणः कश्चिद्राजा, मित्रस्य सूर्यस्य दुहितरि पुत्र्यां, मित्रस्य सुहृदो दुहितरीत्यपि । विक्लवता वैक्लव्यं मदनपारवश्यनिबन्धनं मनश्शैथिल्यं, दशरथः अजस्य सूनुः, इष्टस्य प्राणप्रियस्य रामस्य विश्लेषनिबन्धनेन उन्मादेन चित्तविभ्रमेण । इष्टायां रामायां स्त्रियां विषये सञ्जातेनोन्मादेनेत्यपि । कार्तवीर्यः हैहयः, ब्राह्मणपीडया जमदग्नेः

णपीडया पञ्चत्वमयासीत् । युधिष्ठिरस्समरशिरसि सत्यमुत्ससर्ज । शन्तनुरतिव्यसनात् वने विललाप । तदित्थं नास्त्येव जगत्यकळङ्कः कोऽपि । तदहमपि देहमुत्सृजामीत्येवं विचिन्त्य, कुररनखरशिखरखण्डितपृथुलपृथुरोमशल्कसंकुलं, सङ्कलितजलनकुलकुलोच्चारशारं, क्रोष्टुकुलोत्सृष्टविकटकर्कटकर्परपरम्परापरिगतप्रान्तं, अतितरलजलरयलुलितचटुलशफरकुलकबळनकृतमति निभृतबकशकुनि निवहबहुधवळितपरिसरं, अतिचपलजलकपिकुलविहरणतुलितसलिलकणनिकरपरिमिलनशिशिरिततमालतलं, अनुदिनमिपतदतितरुणमहिषगवलशिखरविलिखितविषमतटं, अनवरतचरदसितमुखचरणविहगवरनिवहमधुकरनिनदमुखरित हिमकर किरणनिकररुचिरजलमनुजगणशयनमृदिततटधरणीतलं, अतिबहुळमदशबळकटतटकरिशतनिपतितमधुकरनिकरं, अतिजवनपवनविधुतजलविघटनानिपतितफणिगणपरिगतपरिसरं,

---

पीडया तदीयधनुबलात्कारलक्षणया हिंसया। पञ्चत्व मरणम्। युधिष्ठिरः धर्मपुत्रः । शन्तनुः देवव्रतस्य पिता । **तदित्यादि** ॥ कुरर उत्क्रोश. । पृथुरोमा मत्स्यविशेष. । शल्क शकलम् । उच्चार सञ्चरणम् । क्रोष्टा शृगालः । कर्कटाः कुळीरा । कर्पराः कपालाः । शफरा. मत्स्यभेदा । निभृताः निश्चला: । गवळ माहिष शृङ्ग । हिमकर. चन्द्र. । शबल मिश्रं । करिणः

जलनिधिजलगतभुजगनिर्मुक्तनिर्मोकपट्टं, दर्पणमिव वसुन्धरायाः, स्फटिककुट्टिममिव वरुणस्य, कमलवनमिव सपद्मरागं, वनप्रदेशमिव सविद्रुमलतं, कान्तारमिव सदरं, विष्णुमिवानेकमुक्तोपेतं, पुलिनतलमाससाद। ततः कृतस्नानादिसकलकृत्यो जलनिधिजलमवतरितुमारेभे शरीरत्यागाय। अथ सानुग्रहेषु ग्राहेषु, निर्मत्सरेषु मत्स्येषु, अक्षुद्रेषु क्षुद्राण्डेषु, अनिच्छेपु कच्छपेषु, अक्रूरेपु नक्रेषु, अभयङ्करेषु मकरेषु, अमारेषु शिंशुमारेपु, आकाशात्सरस्वती समुदचरन्।.'आर्य कन्दर्पकेतो! पुनरपि तव प्रियासमागमो भविष्यत्यचिरेण तद्विरम मरणव्यवसायात्' इति। सोऽपि तदुपश्रुत्य मरणारम्भाद्विरराम। अथ ततइतः परिभ्रमन् फलमूलादिना वने वर्तयन् कालमनेकं निनाय। एकदा तु, कतिपयदिवसापगमे, काकलीगायन इव समृद्धनिम्नगानदः,

---

गजाः। फणिन सर्पाः। निर्मोकः सर्पत्वक्। पद्मराग रत्नविशेषः (पक्षे) पद्माना तामरसाना रागः रक्तिमा। विद्रुमलता प्रवाललता। (पक्षे) वयः पक्षिण. तत्सहिता सवयः तादृशा. द्रुमाः वृक्षा. लता वीरुधश्च यत्र। सदर सशङ्क, (पक्षे) सभयम्। मुक्ता. मौक्तिकानि (पक्षे) अनेकैः मुक्तै. संसारबन्धविनिर्मुक्तै। **अथेत्यादि** ॥ ग्राहा. नक्रा। क्षुद्राण्डा. मत्स्यसङ्घाता.। कच्छपाः कूर्मा.। मकराः महामत्स्या। शिशुमारा नक्रविशेषाः **अथेत्यादि** ॥ वर्तयन् शरीरधारणां विदधत् सन्। **एकदेत्यादि** ॥ काकलीगायनः सूक्ष्मकलगायन। समृद्ध सम्पूर्ण निम्नं नी-

सायन्तनसमयइव नर्तितनीलकण्ठः, कुमारमयूर इव समारूढशरजन्मा, तपस्वीव प्रशमितरजःप्रसरः, तापस इव धृतजलदकरकः, प्रलयकाल इव दर्शितानेकतरणिविभ्रमः, निरुपद्रवकाननप्रदेश इव घनोत्सेकितसारङ्गः, रेवतीकरपल्लव इव हलिधृतिकरः, लङ्केश्वर इव समेघनादः, विन्ध्यइव घनश्यामः, समाजगाम वर्षासमयः । विभिन्ननीलोत्पलकाननीले क्रीडासरसीव नभसि, स्मरस्य रत्ननौकेव, जलदकाललक्ष्मीमातङ्गकन्यानर्तनरज्जुरिव, नभस्सौधतोरण-

---

चैर्भूत गान गीति ददातीति समृद्धनिम्नगानदः (पक्षे) समृद्धाः जलपूर्णाः निम्नगा. नद्य नदाश्च यस्मिन् । नीलकण्ठ, रुद्र. (पक्षे) मयूरः । कुमारः सुब्रह्मण्य तस्य मयूर इव, शरजन्मा स्कन्दः (पक्षे) शराः इक्षुसदृशाः तृणविशेषा । रज. रजोगुण. भूधूलिश्च । करक. कमण्डलुः (पक्षे) जलद. मेघ. करका वर्षोपलाः । तरणि सूर्य (पक्षे) तरणयः पोताः तेषां विभ्रमाः विलासा. । घना. सान्द्राः उत्सेकिताः उद्धताः सारङ्गा. हरिणाः गजा वा यत्र । (पक्षे) घनेन मेघेन उत्सेकिताः सारङ्गाः चातकाः यत्र । हली बलराम. तस्य धृति धरण ता करोतीति करः । (पक्षे) हली लाङ्गलवान् कृषीवलः । तस्य धृतिं धैर्य हर्ष वा करोतीति करः । मेघनादः इन्द्रजित् (पक्षे) मेघध्वनिः । घनवत् मेघ इव श्यामः नीलः (पक्षे) घनेन श्यामः । **विभिन्नेत्यादि** ॥ विभिन्नानि विकस्वराणि । रत्ननौका रत्नैः विरचिता तरणि. । जलदकाललक्ष्मी वर्षासमयशोभैव मातङ्गकन्या चण्डालदारिका तस्याः नर्तनरज्जुरिव, चण्डालप्रभृतयो नीचाः सङ्घीभूय हस्ते धृतरज्जवो मण्डलाकारेण नृत्यन्तीति प्रसिद्धिः ।

रत्नमालिकेव, प्रवसता निदाघकालकान्तेन द्युस्त्रीपयोधरे दत्ता नखपदावलिरिव, गगनलक्ष्मीबन्धुररशनामालेव, नभोमन्दारसुन्दरकलिकेव, रतिनखमार्जनरत्नशिलाशलाकेव, विलासयष्टिरिव मकरकेतोः, इन्द्रधनुर्लता रराज। अतितृष्णावेगपीतजलनिधिजलशङ्खमालां बलाकाच्छलादुद्वमन्निवादृश्यत जलधरनिकरः। पीतहरितैः कृष्णकेदारिकाकोष्ठिकासु समुत्पतद्भिः जतुशबलैरिव दर्दुरशिशुकैः नयद्यूतैरिव चिक्रीड विद्युता समं घनकालकान्तः। रविदीपकज्जलितमेघनिकषोपले मेघसमयस्वर्णकारघर्षितस्वर्णरेखेव तटिदशोभत। विरहिणां हृदयं विदारयितुं करपत्रमिव कृतं कुसुमायुधस्य क्रूरं कैतकच्छदमभासत। विच्छिन्नदिग्वधूहारमुक्तानिकरा इव खरपवनवेगभ्रमितघनघटाघट्टनसंचूर्णिततारानिकरा इव त्रि-

प्रवसता देशान्तरं गच्छता, द्यौरेव आकाशमेव स्त्री तस्याः पयोधरं स्तनमण्डले। नखपदं नखक्षतं। रशना काञ्ची। कलिका कोरकः। रराज दिदीपे। तृष्णा पिपासा। छलं व्याजः। निकरः समूहः। केदारिकाः क्षेत्राण्येव कोष्ठिकाः शारीसञ्चारयोग्यस्थानविशेषाः, जतुनो विकाराः जातुषाणि। दुरोदराणि द्यूतसाधनशाराः। दर्दुराः मण्डूकाः। नयः युद्धनीतिः तत्सम्बद्धैर्द्यूतैः हस्त्यश्वरथपादातैरन्योन्योपमर्दनपुरस्सरप्रतिनायकनिरोधनलक्षणैर्देवनैः। कज्जलित. सञ्जातकज्जल. मेघ एव निकषोपलः सुवर्णघर्षणशिला। **विरहिणामिति** ॥ करपत्रं क्रकचम्। **विच्छिन्नेति** ॥ खरः चण्डः। घटा समूहः। विजिगीषोः विजेतुम् इच्छोः

भुवनविजिगीषोः मकरध्वजस्य प्रस्थानलाजाञ्जलय इव करकाः व्यराजन्त। नवशाद्वलं सेन्द्रकोपं महीमहिलाया लाक्षारसाङ्कितं स्तनोत्तरीयमिवालक्ष्यत । मेघकुम्भसलिलैः पृथिवीनायिकां स्नापयित्वा प्रावृट्चेटिकायां गतायां स्वच्छमम्बरं दर्शयन्ती शरच्चेटिका समाजगाम। अनन्तरं सुखञ्जने निर्भरभरद्वाजद्विजवाचाटविटपिविटपे पटुतरप्रभाप्रभातोद्भ्रान्तशुककुलकलमकेदारप्रवेशिताविशराजहंसे, कंसारातिदेहद्युतिद्युतले, हंसकुलतुलितराजज्जलमुचि सान्द्रीकृतेन्दुमहसि, कामुकजनमुदितमधुतृणवीरुधि, सरससारसरसितसारकासारे, कशेरुकन्दलुब्धपोत्रिपोत्रोत्खातसरसतटभागचकितचातके, विरतवारिदे, तारतरतारके, वारुणीतिलकचन्द्रमसि, स्वादुरसाविकलस्फुरितशफरकवळननिभृतबकानीके, मूकमण्डूकमण्डले,

---

करकाः वर्षोपलाः । **नवेति** ॥ इन्द्रकोपः नानावर्णालङ्कृतपत्रः कीटविशेषः । **अनन्तरमित्यादि** ॥ शोभनाः खञ्जनाः खञ्जरीटाः यस्मिन् सः । भरद्वाजाः व्याघ्राटाः । वाचाटाः सशब्दाः कलमकेदाराः शालिवाट्यः । कंसारातिः श्रीविष्णुः । द्युतलं नभःप्रदेशः । तुलिताः साम्यमापादिताः राजन्तः जलमुचः मेघाः यस्मिन् सः तादृशि । मधुतृणवीरुत् इक्षुः । सारसः जलपक्षिविशेषः । रसितं शब्दः । कासाराः तडाकाः । कशेरुः तृणविशेषः । पोत्री वराहः तस्य पोत्रं घोणाप्रदेशः । विरतः नष्टः शान्तो वा । तारतराः अत्युज्ज्वलाः । वारुणी पश्चिमा दिक् । नरुकः गृध्रः ।

सङ्कोचितकञ्चुकिनि, काञ्चनच्छेदगौरगोधूमकशालिशालिनि, उत्क्रोशदुत्क्रोशे, सुरभिसौगन्धिकगन्धहारिणि, हरिणाश्वदरदलितकुमुदामोदिनि, शरत्समयारम्भे, विजृम्भमाणे, कन्दर्पकेतुस्तत इतः परिभ्रमन् काञ्चिच्छिलामयपुत्रिकां दृष्ट्वा करेण पस्पर्श। अथ सा स्पृष्टमात्रैव शिलाभावमुत्सृज्य वासवदत्तास्वरूपं प्रपेदे। तामवलोक्य कन्दर्पकेतुः सुदृढमालिङ्ग्य, प्रिये! वासवदत्ते! किमेतदिति पप्रच्छ। सा प्रत्युवाच। आर्यपुत्र! अपुण्याया मन्दभाग्यायाः मम कृते, महाभागो भवान् उत्सृष्टराज्यः एकाकी परिभ्रमन् प्राकृतजन इवावाङ्मनसगोचरं दुःखमनुबभूव। उपवासादिना तृषातुरे भवति निद्राशान्ते प्रथमप्रबुद्धाऽहं भवतः फलमूलादिकमाहरिष्यामीति विचिन्त्य, फलाद्यन्वेषणाय वने नल्वमात्रमगच्छम्। अथ क्षणेन तरुगु-

बकालिः बकसमूहः। कञ्चुकिनः सर्पाः। काञ्चनच्छेदः सुवर्णशकलः। उत्क्रोशाः कुररपक्षिणः। सौगन्धिकानि कल्हाराणि। हरिणाश्वः सारङ्गवाहनः वायुरिति यावत्। दरदलितानां ईषद्विकासितानां, कुमुदानां कैरवाणां; आमोदः सौरभ सः अस्यास्तीति आमोदी तस्मिन्। पुत्रिकां प्रतिमां। प्रपेदे लेभे। पद्यतेर्लिटि रूपम्। **आर्यपुत्रेत्यादि** ॥ ममकृते मदर्थे 'अर्थे कृते च शब्दौ द्वौ तादर्थ्येऽव्ययसञ्ज्ञकौ'। इति नाममालायाम्। वाक्च मनश्च वाङ्मनसे 'अचतुरे'त्यादिना समासान्तनिपातः। तयोर्गोचरन्नभवतीति अवाङ्मनसगोचरम्। नल्व: किष्कुचतुश्शतम्। अन्तरित छन्नम्। व्यूहः सेनासमूहः। आहोस्वित् इति विक-

ल्मान्तरितं सेनानिवेशं दृष्ट्वा किमयं ममाकर्षणाय तातस्य व्यूहस्समायातः, आहोस्विदार्यपुत्रस्येति, चिन्तयन्तीम्मां चारकथितोदन्तो दूरात्किरातसेनापतिर्धावति स्म। ततोऽन्यः किरातसेनापतिः तादृश एव सेनान्वितो मृगयार्थमागतः सोऽपि तच्छ्रुत्वा धावति स्म। अथैकामिषलुब्धयोर्गृध्रयोरिव तयोर्युद्धमासीत्। ततः प्रभृति शरासारदुर्दिनस्थगितदिनकरकिरणे, रणकर्मविशारदकरदूरोत्क्षिप्तखड्गधारादलितसुभटाश्लिष्यमाणविद्याधरीविभ्रमे, समरदर्शनागतस्वश्चरदनेकनभश्चरचारणचरणप्रकरविरचिततोरणचक्रवाळे, चरच्चारुभटखड्गखण्डितद्विपपदसमाप्तपिशाचिकाकर्णोलूखलाभरणे, समुत्पतदतिनिनदनान्दीके, कान्दिशीकभीरुणि, प्रस्कन्नक्लीबजने, रणोद्गतजितकाशिनि, रणखले, सृगालिकासृगालप्रार्थनीयेष्वामिषपिण्डेष्विव, जिह्मगदष्टेष्विव, श्वित्रदुर्भगेष्विव, शरीरेषु, नास्थां

---

ल्पार्थकमव्ययम्। चारा. भटाः। उदन्त. वृत्तान्तः। मृगया आखेटम्। आमिषे भोग्यवस्तुनि। स्थगिताः आच्छादिताः। धारा अग्रम। सुभटः शूरैर्योधैः। आश्लिष्यमाणाः आलिङ्ग्यमाना.। चारणाः देवताभेदाः। प्रकरः समूहः। द्विपाः गजाः। उलूखल उदूखलम्। उलूखलवत् अतिविकृतविस्तृते निजकर्णे पिशाचाङ्गनाः कृत्तानि गजपदानि ताटङ्कवत् बिभ्रतीत्यर्थः। नान्दी मङ्गलध्वनिः। कान्दिशीकः भयद्रुत.। प्रस्कन्नाः नष्टा. भीत्या कुहचिन्निलीना.। जितेन जयेन काशते दीप्यते इति जितकाशी। रणखले युद्धभूमौ। जिह्मगाः सर्पाः। श्वित्र कुष्ठरोगः, तेन दुर्भगेषु

कलयन्तस्समं द्वियां धनुषां च जीवाकर्षणं योधाश्चक्रुः । तत्र त्यागिन इव दानवन्तो मार्गणसम्पातं सहन्तस्समृद्धविलासिन इव शृङ्गारोपशोभिताः सहेमकक्ष्याश्च, सदारामा इव कदलीराजिताः सद्द्विजाश्च, निशानिवहा इव नक्षत्रमालोपशोभिताः, शरद्दिवसा इव समुल्लसत्पद्माः महामृगाः बभुः । उत्कुपिता इव क्षमां मुञ्चन्तः, पयोधय इवावर्तशोभिनः सोर्मयश्च, उद्यानोद्देशा इव समल्लिकाक्षाः, कुलालगृहा इवाभिनवभाण्ड-

---

निन्द्येषु । आस्थां प्रेमाण, सम युगपत । जीवाना प्राणानां अन्यत्र जीवायाः ज्यायाः आकर्षणम् । **तत्रेत्यादि** ॥ तत्र, महामृगाः गजाः बभु प्रचकाशिरे इत्यन्वयः । ते कीदृशा इत्यत आह । **त्यागिन इत्यादिना** ॥ त्यागिनः दातार । दानं त्यागः (पक्षे) मदजलम । मार्गणाः याचका (पक्षे) मार्गणा बाणा । सहन्तः तितिक्षमाणाः । 'षह मर्षणे' इति चुरादौ । 'आधृषाद्वा' इति विभाषितणिजन्तः । भौवादिकस्त्वात्मनेपदी । शृङ्ग प्राधान्य इयर्ति गच्छतीति शृङ्गारः रसराजः (पक्षे) गजमण्डनद्रव्यविशेष । हेमकक्ष्या सौवर्ण कटिसूत्र (पक्षे) गजमध्यभागबद्धा रज्जु । 'कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इति नानार्थवर्गे अमरसिंहः । कदली रम्भास्तम्भः (पक्षे) पताका । द्विजाः पक्षिण (पक्षे) दन्ताः । नक्षत्राणां ऋक्षाणां माला परम्परा (पक्षे) सप्तविंशतिमौक्तिकरचितः सरः । पद्मानि तामरसानि (पक्षे) बिन्दुजालकानि । **उत्कुपिता इत्यादि** ॥ क्षमां क्षान्ति भूमि च । आवर्तः जलभ्रमः रोमावर्तश्च । ऊर्मय वीचयः गतिविशेषाश्च । मल्लिकाक्षाः असितचञ्चुचरणाः हंसभेदा । (पक्षे) अश्वजातिविशेषाः । भाण्ड घटशरावादि भूषण च ।

भारिणः, रत्नाकरा इव सदेवमणयः, लेखा इव सेन्द्रवृद्धयः, क्षीबा इव पानभूषिताः, तुरङ्गमा रेजुः । कर्णाभ्यां श्रुतपरापवादाभ्यां, खलोदयसाधुविपत्तिसाक्षिभ्यां अक्षिभ्यां, अस्थानेऽपि नमता मूर्ध्ना कीर्तयता चाकीर्तनीयानास्येन च वियुक्तोऽहं दिष्ट्येति हर्षादिव चिरं ननर्त कबन्धः । ततः परिहासकेनेव चक्षुः पिदधता, परापवादश्रवणभीरुणेव श्रोत्रवृत्तिं स्थगयता, सोन्मादेनेव वायुवेगविक्षिप्तेन, पलितङ्करणेनेव सुरयोपितां, अन्धङ्करणेनेव योधानां, तिमिरेणेव समरप्रदोषस्य, पतितेनेव विमुक्तगोत्रेण, कुनृपतिनेव नक्षत्रपथगामिना, कृतकलहेनेव कृतधूम्यारुचिना, राजसेनेव व्यवहितसत्वेन, अविनीतेनेवोद्धतेन, असज्जनेनेव पिहितसत्पथेन, रणजेन रजोजातेन विजजृम्भे । अनन्तरं च, नारायण इव

---

देवमणिः कौस्तुभः रोमावर्तविशेषश्च । लेखा. देवा , इन्द्रः मघवा, स्वाध्यक्षश्च । **कर्णाभ्यामित्यादि** ॥ परापवाद अन्यनिन्दा । खलाः दुर्जनाः । दिष्ट्या भाग्यातिशयेन । कबन्धः अपमूर्धकलेबरम् । **तत इत्यादि** ॥ परिहासकः परिहसनशीलः पुरुषः । उन्मादः चित्तविभ्रमः । वायुः शरीरस्थो वातः । पलितङ्करण केशेषु शौक्ल्योत्पादनसाधनम् । समर युद्धमेव प्रदोषः रजनीमुखम् । गोत्र अन्वय , गोत्रा भूमिश्च । क्षत्राणां पन्थाः क्षत्रपथः तस्मिन् न गच्छतीति तादृशेन (पक्षे) नक्षत्रपथ आकाशम् । धूम्या धूमानां समूहः । व्यवहित दूरीकृत सत्व सत्वगुणः येन (पक्षे) प्राणिनः । उद्धतः दृप्तः ऊर्ध्वं उद्गतश्च । सत्पथः सन्मार्गः नक्षत्र-

कश्चित् नरकच्छेदमकार्षीत्। कश्चित् बौद्धसिद्धान्त इव क्षपितश्रुतिवचनदर्शनोऽभवत् । कश्चित् क्षपणक इव कटावृतविग्रहोऽभवत्। कश्चित् सुराप इव पपात। कश्चित् सुयोधन इव शङ्कितोरुभङ्गः सरोजलं विवेश । कश्चिच्छरतल्पशय्यागतः भीष्म इव गतायुश्चिरं श्वसन्नासीत्। कश्चित्कर्ण इव विक्लबभूताङ्गः शक्तिमोक्षणमकरोत् । कश्चिद्राघव इव रावणवधमकरोत् । ततो विहस्तध्वजपटं पतत्पताकं व्यूहचारिभटकम्पितखड्गधेनुकं तत्समस्तमुभयं मिथो निधनमवाप सैन्यम् । तत-

वीथीन्व । जातः समूहः । **अनन्तरमित्यादि** ॥ नरकः निरयः, नरकासुरो वा । भगवत एव मोक्षप्रदत्वादिति भावः। (पक्षे) नरकानां नरमस्तकानां छेदं भङ्गम् । बौद्धाः सौगताः । क्षपितं निरस्तं श्रुतिवचनदर्शनं वेदवाक्यानुसारिसत्सिद्धान्तः येन । (पक्षे) श्रुतिः श्रवणं, वचनं व्याहारः । दर्शनं अवलोकनम् । क्षपणकः जैनः । कटैः धूलिभिः शवैश्च आवृतः आच्छादितः विग्रहः शरीरं यस्य सः । सुरापः मद्यपायी। । सुयोधनः दुर्योधनः । शङ्कितः तर्कितः उरुः भङ्गः पराजयः येन सः । (पक्षे) ऊर्वोः सक्थ्नोः भङ्गः आमर्दः । दुर्योधनः युद्धे स्वसैनिकेषु नष्टेषु भीमसेनस्य गदया स्वोरुभङ्गं शङ्कमानः स्यमन्तपञ्चकसरोजलान्तर्निलीनोऽभवदिति भारतकथा । भीष्मः देवव्रतः स इव, शरतल्पं बाणशयनं तत् गतः, गतं नष्टप्रायं आयुः जीवितकालः यस्य । कर्णः राधेयः । शक्तिः एकवीरातिघ्नी महेन्द्रदत्ता गदा । तस्याः मोक्षणं घटोत्कचोपरि प्रयोगश्च । (पक्षे) शक्तिः परनिरसनसामर्थ्यम्। राघवः दाशरथिः, रावणः दशकण्ठः, रवणानां शब्दानां समूहश्च । **तत इति** ॥ विहस्तं विध्वस्तं ध्वजपटं केतुनिबद्धं वस्त्र

श्च स यस्याश्रमस्तेन मुनिना पुष्पादिकमादायागतेन योगदृशा प्रतिपन्नवृत्तान्तेन 'त्वत्कृते ममायमाश्रमो भग्नः' इति कुपितेन 'शिलामयी पुत्रिका भव' इति शप्तास्म्यहम् । ततः क्षणेनैवेयं वराकी बहुदुःखमनुभवतीत्यनुग्रहादार्यपुत्रकरुणया च, स मुनिर्याच्यमान आर्यपुत्रकरस्पर्शावधिकं शापमकरोत् । ततः कन्दर्पकेतुः श्रुतवृत्तान्तेन समागतेन मकरन्देन तया वासवदत्तया च समं स्वपुरं पाटलीपुत्रं गत्वा हृदयाभिलषितानि सुरलोकदुर्लभानि सुखानि ताभ्यां सहानुभवन् कालमनेकं निनाय ।

सरस्वतीदत्तवरप्रसादश्चक्रे सुबन्धुस्सुजनैकबन्धुः ।
प्रत्यक्षरश्लेषमयप्रपञ्चविन्यासवैदग्ध्यनिधिं प्रबन्धम् ॥

इति श्रीकविसार्वभौमसुबन्धुविरचिता
वासवदत्ता सम्पूर्णा
॥ हरिः ओम् ॥

---

यस्मिन । व्यूहः सेनाविभागः तेन तत्र वा चरणशीलाः भटाः यत्र तत् । मध्यमधेनुका छुरिका । **ततश्चेति** ॥ प्रतिपन्नः ज्ञातः । पुत्रिका पाञ्चालिका वराकी शोच्या ॥

**सरस्वतीति** ॥ सरस्वत्या वाग्देव्या, दत्तः विश्राणितः वरप्रसादः अभीष्टप्रदानलक्षणोऽनुग्रहः यस्मै सः, सुजनानां साधूनां एकबन्धुः मुख्यसुहृत् अद्वितीयमित्रं वा । सुबन्धुः तन्नामा कविसार्वभौमः । अक्षरे

अक्षरे प्रत्यक्षर वीप्सायामव्ययीभावः । श्लेष अर्थद्वयप्रतिपादकश्शब्दः तत्प्रचुरः श्लेषमय "तत्प्रकृतवचने मयट्" इत्यनेन मयट् ॥ .य प्रपञ्चः शब्दविस्तारः तस्य विन्यासः अवस्थापन तत्र यत् वैदग्ध्य चातुर्यं (यद्वा) तेन सहृदयाना मनोरञ्जनचातुरी तस्य निधि निधानभूत, प्रबन्ध वासवदत्ताभिधानं ग्रन्थरत्न । चक्रे निर्ममे ॥ वृत्त उपजातिः । "अनन्तरोदीरितलक्ष्मभाज. पादा यदीया उपजातयस्ता. । इत्थ किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम ।" इति लक्षणात् ॥

अस्योत्तरार्धे 'प्रबन्ध' 'निधिर्निबन्धम्' इत्यपि पाठभेदोऽस्ति सच प्रागदर्शितः

सहृदयमनःप्रसत्त्यै सरला सुश्लिष्टशब्दवाच्यार्थाम् ।
व्याख्या व्यरचयदेतां श्रीनिधिसूरिर्यथाप्रज्ञम् ॥

इति श्रीकविशिखामणिसारस्वतसारज्ञतद्वैवाधूलश्रीनिवास
सूरिविरचिता भावप्रकाशिकाख्या
वासवदत्ताव्याख्या सम्पूर्णा ॥
॥ हरिः ओम् ॥